॥ श्रीः ॥

# वार्तिककारो नैष्कर्म्यसिद्धिश्च ॥

—श्री भाष्यस्वामी

भगवत्पादसंभूतां आत्माम्भोनिधिगामिनीम् ।
भाष्यभागीरथीं भूयो भजामो भवशान्तये ॥

ब्रह्मसूत्रावलिं चैव नमामो यमुनासमाम् ।
सरस्वतीसमानां च वार्तिकावलिमन्वहम् ॥

इह खलु सर्वलोकहितैषी भगवान् बादरायणः सर्वतः समेधमानसमधिकसंसारदावदहनदन्दह्यमानान् प्राणिनिकायानालक्ष्य तानेतान् कथंचिदुन्मुमोचयिषुः विविधपुराणेतिहासब्रह्मसूत्रादिप्रणयनद्वारा सदुपदेशामृतमयीं वृष्टिं वितीर्य सर्वमेव जगतीतलमाप्लावयामास । सैव हि लोके शारीरकमीमांसारूपेण परिणेमे ॥

सैषा सूत्रात्मिका शारीरकमीमांसा यमुनातटिनीव स्वान्तर्गतनिरवधिकपदार्थनिगूहनात् अस्फुटीकृताभ्यन्तरभावा भाष्यभागीरथीपाथःसंगमसाभिलाषेव चिरादवतस्थे । कलिन्दजा हि स्वयमेव पवित्रसलिलाऽपि अभङ्गुरगङ्गातुङ्गतरङ्गानुषङ्गेणैव पावनतां प्रतिपद्यते । तथा स्वान्तर्निगूढपदार्थजातप्रकटीकरणपाटवं च प्रतिपद्यते । तथैव हि शारीरकमीमांसा सेयं स्वान्तर्निगूढानां तत्वानां मलिनचित्तेषु स्वयमेव स्फुटीकर्तुं अशक्यतया भाष्यगङ्गासंगमेनैव तत् सुशकमिति तदाविर्भावावसरमेव चिरादपि प्रतीक्षमाणेव समदृश्यत ॥

अथ स भगवान् सर्वविद्याधिपतिः सर्वमङ्गलाजानिः भगवत्पादात्मना स्वयमवतीर्य सर्वगुणोपपन्नां नातिविस्तरामतिगम्भीरां परमानन्दसिन्धुमनुपतन्तीं

भाष्यगङ्गामुत्पादयामास । इमामेव भाष्यभागीरथीमवलम्ब्य वैयासिकसूत्रावलिरूपा यमुना सुरेश्वरवार्तिकावलिरूपा सरस्वती च धन्यं मेनाते आत्मानम् । तथा च सूत्रभाष्यवार्तिकरूपा त्रिवेणी स्वसंसेविनां सकलविधसंशयपङ्कनिर्णेजनेन तदीयं चित्तं स्फटिकवत्परिशुद्धं करोतीति स्फुटमेवैतदनुभवशालिनाम् । प्रकृते च वार्तिकं वा नैष्कर्म्यसिद्धिर्वा कथमात्मानमलभत इति विषये शङ्करविजयकथां किंचिदिव स्मारयामः ॥

भगवत्पादानां हि परःशताः शिष्याः समभूवन् । तन्मध्ये प्रधानशिष्याश्चत्वारः पद्मपादसुरेश्वरहस्तामलकतोटकाख्या आचार्याः । कदाचित् स्वशिष्येभ्यः भाष्यप्रवचनानन्तरं स्वकृतभाष्यस्य विशेषतः सर्वत्र प्रचारार्थं केनचित् वार्तिकनिर्माणं अवश्यं कर्तव्यम् । तत्र तु सुरेश्वर एव समर्थः सर्वशास्त्रपारङ्गतत्वात् इति भगवत्पादैः स्वाशयः प्रकटीकृतः । तदुक्तं —

[1] 'स मण्डनस्त्वर्हति बुद्धतत्त्वः सरस्वतीसाक्षिकसर्वविच्त्वः' इति ॥

इमं च भगवत्पादानामाशयं अन्ये तदीयछात्राः आचिक्षिपुः । यतः सुरेश्वराचार्यः पूर्वाश्रमे कर्मवासनावासितान्तःकरणोऽभूत् । अधुनापि कर्मकाण्डाभिनिवेशः पूर्णतया न गतः । अतः तस्मै वार्तिकनिर्माणाधिकारो दत्तश्चेत् सः भाष्यं सर्वं कर्मकाण्डानुगुणतया योजयित्वा वार्तिकनिर्माणं करिष्यति चेत् ज्ञानकाण्डप्रामाण्यमेव शिथिलीकृतं स्यात् । अतः तस्मै अधिकारो न देयः इति शिष्याः सर्वे गुरुं निर्बबन्धुः । तदुक्तम् —

[2] तात्पर्यं ते गेहिधर्मेषु दृष्ट्वा
तत्संस्कारं सांप्रतं शङ्कमानाः ।
भाष्ये कृत्वा वार्तिकं योजयेत्सः
भाष्यं प्राहुः स्वीयसिद्धान्तशेषम् ॥ इति ॥

---

1. माधवीयशंकरविजये स १३–श्लो ३९
2. ,, स १३–श्लो ४५

तथा वार्तिकनिर्माणे पद्मपादाचार्य एव समर्थः अतः तस्मै वार्तिक-निर्माणानुज्ञा दीयतां इत्यपि शिष्याः समवोचन्; परं तु भगवत्पादाः तत् नाङ्गीचक्रुः; भाष्यव्याख्यानमेकं निर्मातुमेव अनुज्ञां ददुः। तदुक्तं शङ्करविजये माधवीये —

[3]सनन्दनो नन्दयिता जनानां
निबन्धमेकं विदधातु भाष्ये।
न वार्तिकं, तत्तु परप्रतिज्ञं,
व्यधात् प्रतिज्ञां स हि नूत्नदीक्षः॥ इति।

नूतनतया संन्यासदीक्षावान् सुरेश्वराचार्यः वार्तिकनिर्माणे यस्मात् प्रतिज्ञां कृतवान्, तस्मात् वार्तिकनिर्माणे तं विना नान्यस्य अधिकारः इति हि भगवत्पादानामाशयः॥

तथा च भगवत्पादानां इच्छानुसारं सूत्रभाष्यग्रन्थस्य वार्तिकनिर्माणे प्रत्यूह एव संजातः; तथापि अन्यभाष्याणां वार्तिकं कारयितुमेव भगवत्पादा उदयुञ्जत। तदुक्तम् —

[4]शिष्योक्तिभिः शिथिलितात्ममनोरथोऽसा-
वेनं स्वतन्त्रकृतिनिर्मितये न्ययुंक्त। इति॥

इतरशिष्याणामपि प्रत्ययोत्पादनाय आदौ आध्यात्मिकविषये स्वातन्त्र्येण ग्रन्थमेकं रचय इत्यादिष्टश्च सुरेश्वराचार्यः नैष्कर्म्यसिद्धिनामकं प्रकरणग्रन्थमेकं रचयित्वा स्वगुरवे प्रादर्शयत्। ते च भगवत्पादाः तं ग्रन्थं आमूलाग्रं दृष्ट्वा दृष्ट्वा परमानन्दमन्वभूवन्। तदीयपाण्डित्यप्रकर्षं वाङ्माधुरीं प्रतिपादनशैलीं च समवलोक्य 'अहो! ईदृशोऽयं महान् पण्डितः शिष्यः मदीयभाष्याणां वार्तिकं करोति चेत् कियत् रमणीयं स्यात्; तादृशभाग्यं

---

३. मा. श. वि. १३-४३.    ४. मा. श. वि. १३-४९.

नास्ति खलु' इति सुतरां दूयमानहृदयाः सन्तः तैत्तिरीयबृहदारण्यकभाष्ययोः परं वार्तिककरणाय सुरेश्वरमाज्ञापयामासुः। सुरेश्वरोऽपि तामाज्ञां अङ्गीचकार। तदुक्तं शङ्करविजये—

[5] स्वातन्त्र्यात्त्वं ग्रन्थमेकं महात्मन्
कृत्वा मह्यं दर्शयाध्यात्मनिष्ठम् ॥ इति,

[6] तद्वत् त्वदीया खलु काण्वशाखा
ममापि तत्रास्ति तदन्तभाष्यम् । इति,

[7] तत्रोभयत्र कुरु वार्तिकमार्तिहारि
कीर्तिं च याहि जितकार्तिकचन्द्रिकाभाम् ।
... ... ... ... ... ...
मद्वाक्यमेव शरणं व्रज मा विचारीः ॥ इति च ।

तदाज्ञानुसारेण च श्रीसुरेश्वराचार्यः प्रथमतो नैष्कर्म्यसिद्धिं विरचय्य गुरवे समर्प्य तद्दर्शनसन्तुष्टेन गुरुणा पुनराज्ञप्तः सन् तैत्तिरीयभाष्यवार्तिकं बृहदारण्यकभाष्यवार्तिकं च निर्माय गुरवे प्रादर्शयत् । तदाशिषा च वार्तिकद्वयमिदं तथा नैष्कर्म्यसिद्धिश्च अद्यापि अविच्छिन्नतया भारते सर्वत्र प्रथतेतराम् । श्रीपद्मपादाचार्यकृता तु टीका स्वमातुलगृहे दग्धा पुनर्लिखितापि लुप्तप्रचारा भूत्वा कालक्रमात् पञ्चपादिकामात्रशेषा समजनि । तत्रापि लोपात् पुनः चतुःसूत्रीमात्रपरिशेषा अल्पाकारा च सांप्रतमुपलभ्यते । इत्थं वर्तते वार्तिकग्रन्थानां नैष्कर्म्यसिद्धेश्च आविर्भावकथा विचित्रा ॥

प्रकृते नैष्कर्म्यसिद्धिमात्रमवलम्ब्य तत्र प्रतिपाद्यमानां विचारपरिपाटीं प्रक्रियाविशेषान् ग्रन्थान्तरेभ्यः तस्य वैशिष्ट्यं, सर्वशास्त्रार्थनिर्मथनसार-

5. मा. श. वि. १३-४७. 6. मा. श. वि. १३-६६.
7. ,, १३-६७.

संग्रहणादिषु अनन्यसाधारणीं प्रतिपादनशैलीं च ग्रन्थकर्तुर्वाक्यान्येव समुपादाय स्फुटीकर्तुं अधुना किंचिदित्र लेखनीं व्यापारयामः ॥

नैष्कर्म्यसिद्धिरियं चतुरध्यायात्मिका। तत्र प्रथमाध्याये वेदान्तवाक्यानां सर्वेषां ब्रह्मणि समन्वयः प्रतिपाद्यते। द्वितीये प्रमाणान्तराविरोधसमर्थनं क्रियते। तृतीये साधननिरूपणं, चतुर्थे फलनिरूपणं च स्पष्टतया वर्ण्यते। अयं च ग्रन्थः प्रकरणरूपः। प्रकरणलक्षणं च—

शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥

इति वर्णयन्ति। शास्त्रादौ प्रकरणारम्भे च अनुबन्धचतुष्टयं सूचनीयम्। विषयप्रयोजनाधिकारिसंबन्धा एव अनुबन्धचतुष्टयं नाम। तत्सर्वं शास्त्रवत् प्रकरणेऽपि अवश्यं निरूपणीयम्; यतः—

सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते।
ग्रन्थादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥

इत्यभिहितम्। इदं च अनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गमिति हि वदन्त्यभियुक्ताः ॥

अत्र आरम्भे, 'आब्रह्मस्तम्बपर्यन्तैः सर्वप्राणिभिः सर्वप्रकारस्यापि दुःखस्य स्वरसत एव जिहासितत्वात् तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वत एव' इति वाक्येन प्रयोजनं अधिकारी च संसूच्येते। 'दुःखनिवृत्त्यर्था प्रवृत्तिः' इति वाक्यैकदेशे दुःखनिवृत्तिः प्रयोजनं, दुःखनिवृत्तिकामः अधिकारी इत्यपि अर्थाल्लभ्यते। दुःखनिवृत्तिश्च न तात्कालिकी, अपि तु आत्यन्तिकी सा समपेक्ष्यते। आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्। एतादृशदुःखनिवृत्तिमेव प्रेक्षावान् प्रतीक्षते। भाविदुःखं यथा न स्यात् तथा समग्रदुःखनिवृत्तिरेव हि समपेक्षिता मुमुक्षूणाम्; अतः

दुःखनिवृत्तिरूपप्रयोजनं सूचितम् । तादृशदुःखनिवृत्तिकाम एव च प्रकृत-ग्रन्थाध्ययने अधिकारी इत्यपि अर्थात् लभ्यते ॥

तथा 'सुखस्य चानागमापायिनः' इति ग्रन्थेन निरतिशयसुखस्वरूप-मोक्षप्राप्तिरपि प्रकृतग्रन्थाभ्यासस्य प्रयोजनमित्यपि सूच्यते । अत एव निरतिशयानन्दस्वरूपः आत्मैव विषयः ; ग्रन्थस्य विषयस्य च प्रतिपाद्यप्रति-पादकभावः संबन्धः ; प्रयोजनस्य अधिकारिणश्च प्राप्यप्रापकभावः संबन्धः इति अनुबन्धचतुष्टयमिदं ग्रन्थारम्भ एव सूचयति ग्रन्थकारः ॥

ततः परं गुरुणैव वेदान्तार्थस्य परिसमापितत्वात् प्रकरणोक्तौ ख्यात्यादिलाभ एव निमित्तं वा इति शङ्कामुत्पाद्य तां निरस्यति स्वयमेव —

[८] न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते ।
किंतु स्वबोधशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥ इति ।

ब्रह्मविदां समाजे स्वबोधः समीचीनोऽस्ति वा न वा इति परिशोधनार्थं ग्रन्थोयं प्रणीयते इति तदर्थः । अनेन पद्मपादादीनां ब्रह्मविदां स्वविषये यः संशयः पूर्वमासीत्, 'अयं कर्मवासनां अद्यापि न मुञ्चतीति' तादृशसंशयस्यापि एतद्ग्रन्थद्वारा निवृत्तिरवश्यंभाविनी इत्यपि व्यङ्ग्यतया सूचितमस्ति । एतद्ग्रन्थदर्शनात्परं पद्मपादादीनां तद्विषये पूर्वमुत्पन्नसंशय-निवृत्तिद्वारा अत्यन्तं विश्वासोत्पत्तिः पश्चाज्जाता इति कथांशवर्णनात् ॥

ततः परं कर्मभ्य एव मोक्षसंभवात् किं ब्रह्मविद्यया इति आशंक्य समाधत्ते —

[९] यावन्त्यश्चेह विद्यन्ते श्रुतयः स्मृतिभिः सह ।
विदधत्युरुयत्नेन कर्मातो मोक्षसाधनम् ॥ इति शंका,

---

८. नैष्कर्म्यसिद्धि १-६.  ९. १-१४.

[10]अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितैर्यथाशक्ति मुक्तिः स्यान्नान्यसाधनात् ॥

इत्युपसंहारः । पूर्वपक्षसमाधानारंभे –

[11]इति हृष्टधियां वाचः स्वप्रज्ञाध्मातचेतसाम् ।
घुष्यन्ते यज्ञशालासु धूमानद्धधियां किल ॥

इति 'अग्निमुग्धो हैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति' इति श्रुतितात्पर्यमेव श्लोकरूपेण वर्णयति ग्रन्थकारः । पद्मपादादीनामन्यशिष्याणां आक्षेपसमाधानार्थं विश्वासजननार्थं च इदमेकमेवालम् । यतः कर्मिणां कर्मभ्यो मोक्षः इति सिद्धान्तं केवलमुपहासास्पदं प्रदर्शयति ग्रन्थकारः ॥

एवं पूर्वपक्षिणां वादं प्रदर्श्य ततः परं –

[12]अत्राभिदध्महे दोषान् क्रमशो न्यायबृंहितैः ।
वचोभिः पूर्वपक्षोक्तिघातिभिर्नातिसंभ्रमात् ॥

इत्यादिना । ततः ज्ञानकर्मसमुच्चयवादं निरस्य कर्मणां चित्तशुद्ध्यर्थत्वमेव न तु मोक्षार्थत्वं इति सिद्धान्तयति –

[13]प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥

इत्यादिना । तथा–

[14]अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितैर्न मुक्तिः स्यात् ज्ञानादेव हि सा यतः ॥

इति कर्मभ्यो न मुक्तिः किन्तु आत्मतत्त्वज्ञानादेवेति सिद्धान्तमुपसंहरति ॥

---

10. नै. सि १-२१.    11. १-२२.    12. १-२३.
13. १-४९    14. १-९९.

तदित्थं प्रथमाध्याये सर्वोपनिषदां ज्ञानपरत्वमेवेत्युपपाद्य तदविरोध-समर्थनाय द्वितीयाध्यायमारभते ग्रन्थकारः। तत्र च तत्त्वमस्यादिवाक्यादेव अपरोक्षज्ञानसिद्धिरिति स्वमतमाविष्करोति —

[15]सर्वोऽयं महिमा ज्ञेयो वाक्यस्यैव यथोदितः।
वाक्यार्थं न ह्यृते वाक्यात् कश्चिज्जानाति तत्वतः॥

इत्यादिना। तत्त्वमस्यादिवाक्यं कथं बोधं जनयतीत्येतत् दृष्टान्तद्वारा प्रदर्शयति —

[16]योऽयं स्थाणुः पुमानेषः पुंधिया स्थाणुधीरिव।
ब्रह्मास्मीति धियाऽशेषामहंबुद्धिं निवर्तयेत्॥

इत्यादिना। ततः परम् –

[17]यत्र त्वस्येति साटोपं कृत्स्नद्वैतनिषेधिनीम्।
प्रोत्सारयन्तीं संसारमध्यश्रौषं न किं श्रुतिम्॥

इति, अन्ते 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्' इत्यादिश्रुतिवचनानां सर्वसंसारविनिर्मुक्तपरिशुद्धब्रह्मात्मपरत्वस्य सम्यगुपपादनात् सर्वोपनिषदां ब्रह्मपरत्वे न कोपि विरोधः इति अविरोधसमर्थनं सम्यगेव प्रदर्शितं श्रीमद्भिर्वार्तिकाचार्यैः॥

तदुपरि तृतीयाध्यायारंभे आत्मानात्मविवेचनं क्रियते। तत्रादौ अज्ञानस्य आत्मविषयकत्वमेव, न अनात्मविषयकत्वमिति सोपपत्तिकं निरूप्य तादृगज्ञानं आत्मज्ञानमात्रादेव निवर्तते इति अनेकप्रमाणैर्युक्तिभिश्च साधितम्। क्रमेण च तत्पदार्थविचारणं त्वंपदार्थपरिष्करणं असिपदेन तयोरैक्यं च सम्यगेव निरूपितम्॥

---

15. नै. सि. २-४. 16. २-२९. 17. २-११८.

ततः परं सांख्यादिमतं निरस्य बौद्धादिप्रक्रियामपि दूरीकृत्य,

[18] बोधेऽप्यनुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥

इत्यादिना आत्मनो बोधरूपत्वं सर्वानुभवसिद्धमेवेत्युपपाद्य ततः परं भावनारूप-प्रसंख्यानवादमपि निराकरोति —

[19] भावनाजं फलं यत्स्यात् यच्च स्यात् कर्मणः फलम् ।
न तत् स्यात्स्थिरं विज्ञेयं द्रविडेष्विव संगतम् ॥

इत्यादिना द्राविडस्नेहस्य अनित्यत्वदृष्टान्तेन प्रसंख्यानस्य अनित्यफलत्वमुपपादयति । अनेन च स्वसतीर्थ्यभूतं द्राविडं पद्मपादाचार्यमुपहसतीव । निद्रादोषनिवृत्त्यनुपदमेव यथा बोधो भवति संबन्धग्रहणाभावेऽपि, तथैव संबन्धग्रहणं विनापि वाक्यश्रवणमात्रेणापि क्वचित् आत्मबोधः संभवतीति दृष्टान्तेन समर्थयति —

[20] शयानाः प्रायशो लोके बोध्यमानाः स्वनामभिः ।
सहसैव प्रबुध्यन्ते यथैवं प्रत्यगात्मनि ॥

इत्यादिना । इत्थं तत्त्वंपदार्थनिरूपणद्वारा साधनाध्यायमुपसंहरति । ततः परं चतुर्थाध्यायारंभे पूर्वोक्तानुवादपुरःसरं संक्षेपतः आत्मानात्मविवेचनप्रक्रियां पुनर्निरूप्य तत्फलं आत्मतत्वज्ञानमेवेति साधयति ॥

[21] युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।
यतोऽनभिज्ञे वाक्यं स्यात् बधिरेष्विव गायनम् ॥

इत्यादिना युष्मदस्मदर्थविवेचनचतुराणां आत्मानात्मविभागज्ञानामेव वाक्यं बोधं जनयितुमीष्टे अन्येषां विषये तु बधिरे गानकलावत् निष्फलत्वमेवेति साधयति । चतुर्थाध्यायान्ते च एतद्ग्रन्थपठनं विरक्तैरेव कर्तव्यमिति

---

18. नै. सि. ३-३८. 19. ३-९३. 20. ३-१०५. 21. ४-३१.

संप्रदानविधिमुपदिश्य तादृशयतीनामेव यथार्थबोधो भवति नान्येषामिति उपसंहरति—

[22] "निरस्तसर्वकर्माणः प्रत्यक्प्रवणबुद्धयः ।
निष्कामा यतयः शान्ता जानन्तीदं यथोदितम्" ॥

इति । शान्तचित्तानां संन्यासिनामेव एतद्ग्रन्थस्य तत्त्वार्थो गोचरीभवति नान्येषामिति वार्तिकनिर्माणे विघ्नकरान् स्वसतीर्थ्यान् सूचयतीव । अन्ते,

[23]श्रीमच्छङ्करपादपद्मयुगलं संसेव्य लब्ध्वोचिवान्
ज्ञानं पारमहंस्यमेतदमलं स्वान्तान्धकारापनुत् ।
माभूदत्र विरोधिनी मतिरतः सद्भिः परीक्ष्यं बुधैः
सर्वत्रैव विशुद्धये मतमिदं सन्तः परं कारणम् ॥

इति उपसंहरति ग्रन्थम् । अत्र च 'माभूदत्र विरोधिनी मतिः' इति वाक्यं वार्तिकनिर्माणप्रतिबन्धकान् पद्मपादादीन् प्रत्येवेति स्फुटमेवेदम् । एतद्ग्रन्थ-पठनात्परं तु पद्मपादादयः शान्तचित्ता आसन्नित्यपि किंवदन्ती श्रूयते । ग्रन्थसमाप्तौ च भगवत्पादेषु कृतज्ञतां सूचयति —

[24]वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीत् गुरुगुरुः पूज्याय तस्मै नमः ॥

अहमपि अन्ते सूत्रकारसहितं भगवत्पादमेव भूयो भूयो नमस्करोमि॥

शंकरं शंकराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥

---

22. नै. सि. ४-७३   23. ४-७४.   24. ४-७७.

# वार्तिकलक्षणसमन्वयः ॥

विद्वन्मणि, विद्याभूषण
श्री K. P. शंकरशास्त्री,
Bangalore.

विश्वं मायामयत्वेन रूपितं यत्प्रबोधतः ।
विश्वं च यत्स्वरूपं तं वार्तिकाचार्यमाश्रये ॥

श्रीमच्छङ्करभगवत्पादानां चतुस्संख्याकेषु प्रधानशिष्येषु एकतमे श्रीसुरेश्वराचार्याः इति सुविदितमेव सर्वेषामपि । ये किल पूर्वाश्रमे श्रीमत्कुमारिलभट्टपादानां मुख्यान्तेवासिनो महाकर्मनिष्ठा अभूवन् । यांश्च चतुर्मुखस्यैव अपरांशावतारमामनन्ति । येषां च धर्मपत्नी उभयभारत्यपि महामाहेश्वरस्य सुलभकोपस्य महर्षेर्दुर्वाससो वचनमवितथीकर्तुं अवनिमवतीर्णा भगवती वाग्देवतैवेति तद्विदामाघोषः । ये च तदात्वे भगवत्पादाचार्यैः साकं बहुधा व्युद्य, अन्ते तेषामेव मुख्यान्तेवासिपदमवाप्ताः, अनन्तरं च शृङ्गगिरावेव जगद्गुरुपीठाऽऽद्याचार्यपदमलमकुर्वत ॥

येषां च विदेहकैवल्यानन्तरं भौतिकदेहसमाधिस्थले चिरकालसुरक्षिते, नूतनतया आलयनिर्माणपारमेश्वरलिङ्गप्रतिष्ठापनादिपूर्वकं पुनः कुम्भाभिषेकादि-महोत्सवाः नानादेशीयानां भक्तजनसार्थानां प्रार्थनानुरोधेन, संप्रति जगद्गुरु-पीठमलंकुर्वाणैः विद्यातीर्थापरस्वरूपैः अभिनवविद्यातीर्थमहास्वामिचरणैः महता समारम्भेण निर्वर्त्यन्ते ॥

तेऽमी सुरेश्वराचार्यवर्याः वार्तिकाचार्यप्रथाहेतुत्वेन महान्तं बृहदारण्य-कोपनिषद्भाष्यवार्तिकग्रन्थं तैत्तिरीयोपनिषद्भाष्यवार्तिकग्रन्थं च भगवत्पादीय-ग्रन्थव्याख्यानरूपतया व्यरीरचन् । स्वातन्त्र्येण च नैष्कर्म्यसिद्ध्यभिधानं प्रकरणग्रन्थं जग्रन्थुः । तच्चेत्थं श्रूयते —

भगवत्पादाः किल दिग्विजयसर्वज्ञपीठारोहणाद्यनन्तरं शृङ्गगिरौ कञ्चन कालं स्वप्रणीतान् भाष्यादिग्रन्थान् शिष्यानध्यापयन्त आसन्। तदा च "अष्टौ सहस्राणि बिभान्ति विद्वन् सद्वार्तिकानां प्रथमेऽत्र भाष्ये" इति प्राक्तनीं भट्टपादोक्तिं स्मृत्वा, तेषामभावेऽपि, तच्छिष्यमुखेनैव स्वकीय-भाष्यस्य व्याख्यां कारयिष्यामीति मन्वानाः श्रीमदाचार्यपादाः ब्रह्मसूत्रभाष्य-व्याख्यानरूपेण वार्तिकग्रन्थरचनाय सुरेश्वरमाज्ञापयामासुः। परन्तु तद्विषये इतरशिष्याणामसम्मतिमवगम्य, स्वातन्त्र्येणैकं ग्रन्थं, तैत्तिरीयकबृहदारण्य-कोपनिषद्भाष्ययोः वार्तिकग्रन्थं च विरचयितुमाज्ञापयन्। तदनुसारेण नैष्कर्म्य-सिद्ध्याख्यं प्रकरणं, तैत्तिरीयभाष्यवार्तिकं, बृहदारण्यकभाष्यवार्तिकं च भाष्यार्थाशयाविष्कारकं प्राणैषुः; येनैतेषां 'वार्तिककाराः' इति प्रथा संजाता॥

ज्ञानं व्याकृतमप्यन्यैः वक्ष्ये गुर्वनुशिक्षया। (नै. सि. १-३)

तत्र वार्तिकं नाम—

'उक्तानुक्तदुरुक्तानां चिन्तनं यत्र वा भवेत्।
तमाहुर्वार्तिकं नाम ग्रन्थं ग्रन्थविचक्षणाः'॥

इत्युक्तलक्षणम्। तच्चात्र ग्रन्थे बहुत्र सुस्पष्टमुपलभ्यते। तदत्र स्थाली पुलाकनयेन किंचिदुदाह्रियते —

बृहदारण्यके तृतीयाध्याये पञ्चमे कहोळब्राह्मणे श्रूयते—

"एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति। तत्र च भाष्यम् — 'ब्राह्मणग्रहणं ब्राह्मणानामेवाधिकारो व्युत्थाने इति ज्ञापनार्थम्' इति। अत्र प्रकरणे एतद्भाष्यव्याख्यानावसरे इदं वार्तिकम् —

"अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः।

न संन्यासविधिर्यस्मात् श्रुतौ क्षत्रियवैश्ययोः ॥" ३-५-८८

इति । इदं च वार्तिकं यथाश्रुतभाष्यशब्दार्थविवरणमात्रपरम् । न तु स्वाभिप्रेतमुख्यतात्पर्यप्रतिपादनपरम् यतः तदुपरीत्थमाक्षेपो भवति । कथम् ? "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा, यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति जाबालश्रुत्या ब्राह्मणादीनामधिकारिविशेषणामग्रहणेन सामान्यतः प्रवृत्तया त्रयाणामपि वर्णानां संन्यासेऽधिकारः उक्तो भवति । तथा — 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात् । त्रयाणामपि वर्णानाममी चत्वार आश्रमाः' इति स्मृत्यापि अयमेवाभिप्रायो व्यक्तीकृतः । एवं सति कथमत्र ब्राह्मणानामेव संन्यासेऽधिकारो नान्येषामिति वर्ण्यते ? इति ॥

अपिच संन्यासस्य ब्राह्मणमात्राधिकारिकत्वे संन्यासरहितयोः क्षत्रियवैश्ययोः वेदान्तश्रवणाधिकारोऽपि न सिद्ध्येत् । तथाहि — "शान्तो दान्त उपरतस्तितिक्षुः" इत्यादिश्रुतौ 'उपरत'शब्दगृहीतस्य संन्यासस्य साधनचतुष्टयान्तर्गतत्वात् । "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" इति सूत्रभाष्ये — "तद्वतः-विद्यावतः संन्यासिनः बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते — 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येति' श्रुतौ ततः प्राक् 'भिक्षाचर्यं चरन्तीति' संन्यासाधिकारात्" इति प्रतिपादनात् । तदभिप्रायेणैव वार्तिककारैरपि —

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥

इत्युक्तत्वाच्च । अत्र वार्तिकश्लोके त्यक्ताशेषक्रियस्य संन्यासिन इत्यर्थः । संसारं प्रजिहासतः मुमुक्षोः, त्रय्यन्तेषु-वेदान्तश्रवणे अधिकार इत्यर्थः । तथा च संन्यासस्य ज्ञानसाधनवेदान्तश्रवणाद्यधिकारिविशेषणतया विद्योपयोगित्वावगमात्, 'राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र

मूर्धाभिषिक्तस्य राज्ञस्ततः स्वाराज्यकामस्य राजसूयाधिकारवत् संन्यासवत एव वेदान्तश्रवणेऽधिकार इत्यवगम्यते। तथा च सति तद्रहितयोः क्षत्रियवैश्ययोः श्रवणाधिकारो न स्यात् इति। तथा च कथं भाष्यकाराणां ब्राह्मणस्यैव संन्यासेऽधिकारोक्तिः हृदयंगमा स्यात्? इति शङ्कायाम् वार्तिककारा वदन्ति-

त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ।
यदोपलक्षणार्थं स्यात् ब्राह्मणग्रहणं तदा॥ (३-५-८९)

अयमाशयः — 'ब्रह्मचर्यादेव प्रव्रजेत्', 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिश्रुतौ सामान्यतः अधिकारिविशेषाग्रहणेन विरक्तमात्रस्य संन्यासः प्रतिपाद्यते। न 'च सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति न्यायेन "ब्राह्मणो निर्वेदमायात्' 'ब्राह्मणः प्रव्रजेद्गृहात्', इत्यादि-विशेषवचनानुसारेण सामान्यवचनस्य विशेषे संकोचः क्रियतामिति शंक्यम्, "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेत् गृहादिति" विशेषस्मृत्यनु-गृहीतायाः सामान्यश्रुतेः अर्थसंकोचकल्पनायोगात्। एवं च यदा तु ब्राह्मणवत् क्षत्रियवैश्ययोरपि प्रबलप्रमाणानुसारेण संन्यासेऽधिकारः सिद्धः, तदा — 'ब्राह्मणाः प्रव्रजन्ति', 'ब्राह्मणो निर्वेदमायात्' इत्यादौ श्रूयमाणं ब्राह्मणपदं त्रयाणामपि उपलक्षणार्थमिति ज्ञेयम्। इति श्रुत्याशय-व्याख्यानेन वार्तिककाराः समादधुः॥

नन्वेवं सति प्रबलो भाष्यकारोक्तिविरोधः प्रसज्यते, यतो भाष्यकाराः किल श्रुतौ ब्राह्मणपदं इतरेषामनधिकारबोधनेनैव सार्थकमिति स्पष्टमामनन्ति। त्रैवर्णिकाधिकारित्वे कथंकारं भाष्यविरोधः परिह्रियते इति चेत् इत्थम् — भाष्ये ब्राह्मणमात्रस्याधिकारोक्तिः विविदिषासंन्यासविषया, न तु विद्व-त्संन्यासविषया। तथाहि — द्विविधः संन्यासः — विविदिषासंन्यासो विद्व-त्संन्यासश्चेति। यः पुमान् नित्यनैमित्तिककर्मानुष्ठानेन परिपक्वकषायः,

विविधक्लेशानुभवेन विषयदोषानुभवेन चोत्पन्नवैराग्यः आत्मतत्त्वजिज्ञासुश्च सन्नपि अनन्यव्यापारतया श्रवणादिकं कर्तुं न शक्नोति, तादृशस्य निष्प्रत्यूह-श्रवणाद्यनुष्ठानसम्पत्त्यर्थं विधिप्राप्तानामपि कर्मणां, 'त्रिंशद्वा वर्षाणि, जीर्णो वा विरमेत्' इत्यादिश्रुत्यनुसारेण त्रिंशतं वत्सरान् नित्यादिकर्मा-नुष्ठानानन्तरं, वार्धक्यप्राप्तौ वा, "यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः"— यज्ञोपवीतादिसाध्यानि वेदप्रतिपाद्यानि सर्वकर्माणि वर्जयेत् 'संन्यस्य श्रवणं कुर्यात्' इत्युक्तप्रकारेण विधिपूर्वकमेव यत्संन्यसनं सोऽयं विविदिषासंन्यासः ॥

यस्य तु ऐहिकेन आमुष्मिकेण वा नित्यनैमित्तिकाद्यनुष्ठानेन चित्तशुद्धिद्वारा परमेश्वरप्रसादाच्च निष्प्रत्यूहं श्रवणादिनिष्पत्त्या आत्मापरोक्षज्ञानं निर्विचिकित्सं उत्पन्नं, तस्य 'संन्यासेन देहत्यागं करोति स परमहंसो नाम' इत्यादिप्रमाणानुसारेण क्रियमाणः संन्यासः 'विद्वत्सन्न्यासः' इत्युच्यते ॥

तत्र प्रथमे विविदिषासंन्यासे 'ब्राह्मणस्यैवाधिकारो नेतरेषां' इति भाष्यकाराशयः। स च अधिकारिविशेषस्य ज्ञापनाय ब्राह्मणपदग्रहणमित्युक्तः। यस्तु द्वितीयो विद्वत्संन्यासः 'एतावदुक्त्वा याज्ञवल्क्यो विजहार' इति याज्ञ-वल्क्यादिभिः गृहीतः तत्र त्रयाणामपि वर्णानामस्त्यधिकारः इति श्रुतिस्मृति-वचनपर्यालोचनेनावगम्यते। तदेतद्वार्तिककारैरेव समनन्तरवार्तिकाभ्यामुप-पादितमस्ति —

कर्माधिकारविच्छेदि ज्ञानं चेदभ्युपेयते ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥ ३–५–९०

प्रत्यग्याथात्म्यविज्ञानस्वभावश्चेत् समर्थ्यते ।
व्युत्थानं यस्य यस्य स्यात् स स व्युत्थातुमर्हति ॥ इति ,, ९१

'एतं वै तमात्मानं विदित्वा ब्राह्मणा व्युत्थाय प्रव्रजन्ति' इति श्रुतिप्रमाणेन, 'न तु वेदान्तवेद्यं अशनायाद्यतीतं अपेतब्रह्मक्षत्रादिभावं अखण्डमद्वितीयं असंसार्यात्मतत्वं इति ज्ञानं कर्मानुष्ठानोपयोगि' इति भाष्यकारोक्तरीत्या च अकर्त्रात्मज्ञानं यदा जातं तदनन्तरं, संन्यासविषये ब्राह्मणस्याधिकारः नतु क्षत्रियादेः इत्याद्यधिकारनियमे प्रयोजनं नास्त्येव। तादृशप्रत्यगात्मयाथात्म्यविज्ञानं यस्य यस्य भवति स सः व्युत्थातुमर्हत्येवेत्यर्थः। तथा च विद्वत्संन्यासः त्रैवर्णिकाधिकारिकः, विविदिषासंन्यासस्तु ब्राह्मणस्यैवेति निर्णयात् न श्रुतिभाष्यविरोधलेशोऽपि ॥

तथाच सुष्ठु निरूपितमेतत् श्रीमद्भिरप्पय्यदीक्षितेन्द्रैः पूर्वोत्तरमीमांसकमूर्धन्यैः स्वकीयसिद्धान्तलेशसंग्रहे तृतीयपरिच्छेदे—'यत्तु संन्यासस्य सर्वाधिकारित्वेन वार्तिकवचनं तत् विद्वत्संन्यासविषयं, नतु आतुर-विविदिषासंन्यासे भाष्याभिप्रायविरुद्धसर्वाधिकारप्रतिपादनपरम्। सर्वाधिकारविच्छेदीति समनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तिकाले विद्वत्संन्यास एव अधिकारनियमनिराकरणात्' इति ॥

न चैवं 'ब्राह्मणाः प्रव्रजन्ति' इत्यादिश्रुतौ ब्राह्मणपदग्रहणवैयर्थ्यं शंक्यम्। यतः—

एवं चेद्ब्राह्मणोक्तिः स्यात् ध्वस्ताविद्यगृहीतये।
स ब्राह्मणः इति स्पष्टं श्रुतिरन्ते च वक्ष्यति ॥ ३—५—९२

अयमर्थः — त्रैवर्णिकाधिकृतं चेद्विज्ञानं, तदा ध्वस्ताविद्यगृहीतये — विज्ञानपूर्वकसाक्षात्कारफलभूतं यत् अविद्यारहितात्मस्वरूपं, तदनुवादार्थं ब्राह्मणपदम्। युक्तं च विशेषावस्थायां क्षत्रियादेरपि ब्राह्मण्यं राजसूयादौ, तत्रापि ताच्छब्द्यादिति भावः। कथं वात्र ब्राह्मणपदेन फलावस्थोच्यते? वाक्यशेषादित्याह — 'स ब्राह्मण' इति। अस्यामेव बृहदारण्यकश्रुतौ

एतद्वाक्यसन्दर्भान्ते द्वितीयवारं पूर्णब्राह्मण्य (ब्रह्मनिष्ठतास्वरूप) प्राप्त्यर्थक-ब्राह्मणपदग्रहणादित्यर्थः। अत्रेदं प्रासङ्गिकतया किंचिद्विचार्यते विषयविशुद्ध्यर्थम्। किं संन्यासस्य दृष्टद्वारा वा अदृष्टद्वारा वा, श्रवणाङ्गत्वं वा? उताहो आत्मज्ञानाङ्गत्वं वा इत्यादि। तत्र 'शान्तो दान्त उपरतः' इत्यादिश्रुति-सहकार्यन्तरविधिसूत्र - तद्भाष्यानुसारेण, त्यक्ताशेषक्रियस्यैवेत्यादिपूर्वोदाहृत-वार्तिकानुसारेण च संन्यासजन्यादृष्टस्य पापध्वंसरूपस्य, ज्ञानोत्पत्तियोग्यता-प्रयोजकपुण्यरूपस्य वा ज्ञानसाधनवेदान्तश्रवणाधिकारिविशेषणत्वात् अदृष्ट-द्वारा संन्यासस्य श्रवणाङ्गत्वमिति केषाञ्चिदाशयः॥

संभवति दृष्टद्वारे अदृष्टद्वारकत्वादिकल्पना न न्याय्येति कृत्वा अनन्यव्यापारतया श्रवणादिनिष्पादनं कुर्वतः संन्यासस्य श्रवणाद्यङ्गतया आत्मज्ञानफलकत्वं युक्तमिति बहूनां विवरणकाराद्याचार्याणामाशयः। तथाहि—कादाचित्कं श्रवणादिकं विद्योदयद्वारा नामृतत्वसाधनं भवति, किन्तु सार्वकालिकमेव, 'ब्रह्मसंस्थोऽमृतत्वमेति' 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया', इत्यादिबहुप्रमाणानुरोधात्। तथा चानन्यव्यापारतया श्रवणाद्यनुष्ठानं विदधता शास्त्रेणैव संन्यासोऽपेक्ष्यते। गृहस्थादेः स्वाश्रम-विहितकर्मव्यग्रस्य विशेषेण कुटुम्बपोषणव्यापारशतावृतस्य सदा श्रवणाद्यनु-ष्ठानासंभवात्। तथा विद्यासाधनत्वेन संन्यासं विदधतापि शास्त्रेण द्वारतया निरन्तरश्रवणाद्यनुष्ठानमपेक्ष्यते संन्यासस्य साक्षात् विद्यासाधनत्वाभावात्। नहि संन्यासग्रहणमात्रेण ज्ञानसिद्धिः मुक्तिर्वा भवित्री, किन्तु अनन्य-व्यापारतया अनुष्ठितश्रवणादिद्वारैव। दृष्टद्वारसंभवे अदृष्टकल्पनानुपपत्तेश्च। तत्रापि श्रवणादिकं तत्वव्यञ्जकत्वात् अर्थतः (फलतः) प्रधानं भवति। सन्यासस्तु तदभावात् गुणभूततया व्यवतिष्ठते। एवंरीत्या श्रवणविधेः संन्यासविधेश्च परस्परापेक्षाबलात् एकवाक्यभावमापन्नाभ्यां तत्तद्विधिभ्यां संन्यासाङ्गकं मनननिदिध्यासनसहितं श्रवणं विधीयते इति सिद्धा संन्यासस्य अनन्यव्यापारतया श्रवणादिसंपादकत्वेन श्रवणाद्यङ्गतया आत्मज्ञानसिद्धि-

फलकता इति । अत्रेदं प्रतिभाति— यद्यपि संन्यासविषये भाष्यकारोक्तब्राह्मण-मात्राधिकारिकत्वस्य विविदिषासंन्यासपरत्वेन, वार्तिककारोक्तत्रैवर्णिकाधि-कारित्वस्य विद्वत्संन्यासविषयत्वेन च व्यवस्थोक्त्या भाष्यवार्तिकयोर्विरोधः परिहृतो भवति, श्रुतिस्मृतिवचनानामपि व्यवस्थितविषये प्रामाण्यमुक्तं भवति, तथापि किंचिद्विचार्यमाणे विविदिषासंन्यासेऽपि श्रवणाङ्गभूते इतरेषा-मधिकारोऽस्तीत्येव वक्तव्यं भवति। कथमन्यथा गीतायां — 'संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि। यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' ॥ इति पृष्टवन्तमर्जुनं प्रति इत्थं समाधानमुक्तम् — 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥' इति। वीरक्षत्रियस्यार्जुनस्य सर्वथा संन्यासानधिकारित्वे, 'क्षत्रियस्त्वं सर्वथा सन्यासेऽनधिकारी, अतस्त्वया कर्मैव कर्तव्यम्' इत्येव भगवता समाधानं वक्तव्यमासीत्। परन्तु तथाऽनुक्त्वा कर्मफलत्यागरूपं गौणं सन्यासं कर्तव्यमुक्तं भगवता। कुतः? 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्'। यदा पूर्णवैराग्योत्पत्तिपूर्वकं आत्मविविदिषोत्पद्यते, तदानीमेव पारिव्राज्यं स्वीकार्यम्। अर्जुनस्तु न तथा विरक्तः। किन्तु कौरवादीनेकेन बाणेन भस्मसात्करोमि इत्येवं महता क्रोधावेशेनैव युद्धे प्रवृत्तः। तथाप्याचार्य-बन्ध्वादिषु ममतानिमित्तं मध्ये धर्म्यादपि युद्धादुपरतिं प्राप्तवान्। तं च स्वधर्मभ्रष्टं परधर्ममुपाददानं पुनः स्वधर्मे स्थापयितुं भगवान् 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः। इत्याद्युपदेशेन पुनर्युद्धे प्रवर्तयामासेति गम्यते ॥

अतश्च — 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात्। त्रयाणामपि वर्णानां संन्यासः श्रूयते श्रुतौ ॥' इत्यादिस्मृत्यनुसारेण त्रैवर्णिका-नामपि श्रवणाङ्गभूते विविदिषासंन्यासेऽपि अस्त्येवाधिकार इत्येव वक्तव्यम्। स च कर्मफलत्यागरूपः कर्म( स्वरूप )त्यागरूपो वा भवितुमर्हति ॥

परन्तु एतावद्विज्ञायते — 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मः प्रकीर्तितः ॥' इत्युक्तत्वात् ब्राह्मणव्यतिरिक्तानां काषाय-दण्डधारणादिरूपलिङ्ग ( चिह्न ) धारणवर्जं कर्मस्वरूप-तत्फलत्यागरूपे गौणे श्रवणाङ्गविविदिषासंन्यासेऽधिकारः; न दण्डकाषायादिलिङ्गविशिष्टे इति । अन्यथा युद्ध-गोरक्षा वाणिज्यादिव्यापृतत्वेन तेषामनन्यव्यापारतया आत्मैक्य-श्रवणाद्यसंभवात् । अपशूद्राधिकरणे 'श्रुतिपूर्वकस्तु नाधिकारः शूद्राणामिति स्थितम्' इत्युक्त्वा भाष्यकारैरेव — 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मण-मग्रतः' इति वचनेन पुराणादिद्वारा शूद्रादेरपि आत्मज्ञानं संपादयितुं शक्यमित्युक्तम् । अतश्च स्त्रीशूद्रादेरपि कर्मान्तरव्यापृतत्वे पुराणादिद्वारापि निरन्तरं आत्मविषयकश्रवणादिकं कथं कर्तुं पार्यते? गार्गीविदुरादयोपि ज्ञानिनः लिङ्गग्रहणं विना संन्यासिधर्मेण श्रवणादिकं निरवर्तयन्नित्येवावगम्यते । अत एव च — 'द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च' इत्यादि हारीतादिस्मृतिषु उच्यते । तथा च भाष्य-वार्तिक-श्रुति स्मृति वचनानां सर्वेषामेकवाक्यतया अविरोधोऽपि सिद्ध्यतीति प्रतीयते। परन्तु धर्मविषये नास्माभिरभिनिवेशः कर्तव्यः । 'महाजनो येन गतः स पन्थाः' 'पूर्वैः पूर्वतरं कृतम्' इत्यादिभगवद्वचनमेव शरणम् ॥

इत्थं श्रीसुरेश्वराचार्याः श्रीमद्भगवत्पादभक्तेषु शिष्येषु चाग्रगण्याः तदीयपरमानुग्रहपात्रीभूताः स्वयं महश्रोत्रिया ब्रह्मनिष्ठाश्च भगवत्पादीय-सूत्रभाष्यवदेव चतुरध्यायात्मिकां निखिलदुर्वादिमदभञ्जनीं करतलामलकवदेव सकलवेदान्तार्थावभासिनीं स्वतन्त्रां नैष्कर्म्यसिद्धिं निर्माय मन्दाधिकारिणो-ऽप्यनुजगृहुरिति तत्तादृक्षाणां महाचार्यपुरुषाणामुपदेशोक्तिमवलम्ब्यास्माभिः गोष्पदीकृतसंसारवाराशिभिः परमपुरुषार्थभाग्भिर्भाव्यमिति शिवम् ॥

---

॥ श्रीगुरुभ्यो नमः ॥

# किंचिदधिनैष्कर्म्यसिद्धि

–V S. रामचन्द्रशास्त्री

यत्कटाक्षलवेनैव पशुता मे व्यनीनशत् ।
तच्छ्रितामयदं ब्रह्म चन्द्रशेखरमाश्रये ॥

हृदि भातु चन्द्रशेखरभारत्यभिधं सदा परं ज्योतिः ।
यच्छ्रीसुरेश्वरादिमदर्शितपदवीमदीदृशच्छिष्यान् ॥

सिद्ध्यन्तपदप्रतिपाद्याः केचन ग्रन्थाः प्रसिद्धा दार्शनिकानाम् । यथा विज्ञप्तिमात्रतासिद्धिः, बाह्यार्थसिद्धिरित्यादयः । औपनिषदानां ब्रह्मसिद्धिप्रभृतयः प्रतीताः । यदाहुः श्रीमधुसूदनसरस्वत्योऽद्वैतसिद्धिसमाप्तौ ॥

'सिद्धीनामिष्टनैष्कर्म्यब्रह्मगानामियं चिरात् ।
अद्वैतसिद्धिरधुना चतुर्थी समजायत' ॥

इति । चतसृष्वासु श्रीमत्सुरेश्वराचार्यप्रणीता 'नैष्कर्म्यसिद्धिः' ग्रन्थतोऽल्पापि बह्वर्थावहा नायकमणिरिव शोभते । संप्रतिपन्नगार्हस्थ्याः श्रीविश्वरूपाचार्याः जल्पकथायां विजितास्तुरीयमाश्रमं भगवत्पादेभ्यः स्वीकृत्य तदन्तेवासितामितास्तत्सन्निधौ ब्रह्मसूत्रभाष्यादिकमध्यैषत । तदादेशवशंवदतया, न ख्यातिलाभपूजार्थं, किन्तु ब्रह्मविन्निकषाश्मसु स्वबोधपरिशुद्ध्यर्थं 'नैष्कर्म्यसिद्धिः' इति प्रथितं ग्रन्थं रचयामासुः । तदुक्तम्—

[1] शिष्योक्तिभिः शिथिलितात्ममनोरथोऽसा-
वेनं स्वतन्त्रकृतिनिर्मितये न्ययुङ्क्त ।

---

1. माधवीयशंकरविजये १३-४९.

नैष्कर्म्यसिद्धिमचिराद्विदधत्स चेत्थं
न्याख्यामविन्दत सुरेश्वरदेशिकाख्याम् ॥ इति,

[1] नैष्कर्म्यसिद्धिकृतिमाशु विधाय सोऽपि
ब्रह्मैक्यबोधनपरां गुरवे निवेद्य ।
ते वार्तिके अपि समर्प्य सुरेश्वरार्य-
संज्ञां प्रहर्षितगुरोः कृपयाशु लेभे ॥

इति च । श्लोकरूपेयमध्यायचतुष्टयात्मिका । अस्याः सुखप्रतिपत्तये गद्यरूपा संबन्धोक्तिरपि सुरेश्वराचार्याणामेव, यतस्तैरेवोक्तम्—

[2] 'संबन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता ।
नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्यातासौ भवेद्ध्रुवम् ॥ इति ।

प्रकरणं चेदम् निष्प्रपञ्चब्रह्मप्रतिपादनेन शास्त्रैकदेशसंबद्धं शास्त्रे विस्तरेण प्रतिपादितानां संक्षेपतः प्रतिपादनं संपादयत्,

'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः' ॥

इति प्रोक्तलक्षणयुग्भवति ॥

ब्रह्मसिद्धिः, नैष्कर्म्यसिद्धिः, इष्टसिद्धिः, अद्वैतसिद्धिः इति प्रथितासु चतसृषु मण्डनमिश्रप्रणीता ब्रह्मसिद्धिः प्रथमा । ततः नैष्कर्म्यसिद्धिः सुरेश्वराचार्यैः व्यरचि, यत्कारणं तत्र मण्डनमतमनूद्य निरस्यन्ति । यथा चैतत्तथोत्तरत्र निरूपयिष्यते । इष्टसिद्धिः विमुक्तात्मकृता नैष्कर्म्य-सिद्ध्यनन्तरकालिकी, यतस्तत्र 'तदुक्तं वार्तिककारैः —

---

1. गुरुवंशकाव्ये २-५९. 2. नै. सि. ४-७८.

[1] 'नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोस्ति कश्चन ।
इत्यजानन्विजानाति यः स ब्रह्मविदुत्तमः ॥'

इति नैष्कर्म्यसिद्धिवचनं स्वाभिप्रायोपोद्बलकतयोदाजाहार ॥

ग्रन्थस्यास्य नैष्कर्म्यसिद्धिरिति नामकरणे 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' इति भगवद्गीता मूलं स्यादिति वितर्कये । नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणावस्थानमिति नैष्कर्म्यशब्दार्थः भगवत्पादैः 'न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते' इति गीताभाष्ये विवृतः । 'नैष्कर्म्यसिद्धिं परमां' इत्यत्रापि 'निर्गतानि कर्माणि यस्मात् निष्क्रियब्रह्मात्मसंबोधात्स निष्कर्मा तस्य भावो नैष्कर्म्यं, नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्यसिद्धिः, नैष्कर्म्यस्य वा सिद्धिः निष्क्रियात्मस्वरूपावस्थानलक्षणस्य निष्पत्तिः तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपाम्' इति नैष्कर्म्यसिद्धिपदं स्पष्टमर्थापितम् । ईदृशीं नैष्कर्म्यसिद्धिं प्रति ज्ञानद्वारा हेतुभावेन ग्रन्थोऽपि नैष्कर्म्यसिद्धिरिति व्यपदेशमर्हति । अथवा अद्वैतसिद्धिरित्यादिषु सिद्धिपदं निश्चयपरतया व्याचक्षते । इहापि नैष्कर्म्यस्य सकलकर्मशून्यब्रह्मात्मस्वरूपस्य सिद्धिः निश्चयः नैष्कर्म्यसिद्धिः तद्धेतुत्वाद्ग्रन्थोऽपि तथा व्यपदिश्यते लाङ्गलं जीवनमितिवत् ॥

[2] 'सुभाषितं चार्वपि नामहात्मनां
दिवाकरो नक्तदृशामिवामलः ।
प्रभाति भात्येव विशुद्धचेतसां
निधिर्यथापास्ततृषां महाधनः ॥'

इति नैष्कर्म्यसिद्धीयचतुर्थाध्यायगतपद्येनेदं सूच्यते — यदेतद्ग्रन्थप्रतिपादिताः केचन सिद्धान्ताः केषाञ्चिदसम्मताः । युक्तिभिः प्रतिबोधिता अपि न तान्स्वी-

1, नै. सि. ४-५३ 2. नै. सि. 4-75.

कुर्वन्तीति। भगवत्पादसमकालीना मण्डनमिश्रा ब्रह्मसिद्धौ बहुत्र भगवत्-पादमतं खण्डयन्ति। भगवत्पादानुयायिनः सुरेश्वराचार्या नैष्कर्म्यसिद्धौ बृहदारण्यकभाष्यवार्तिके चाचार्यमण्डनमतं पराकृत्य भगवत्पादसिद्धान्तं समर्थयन्ति। नैष्कर्म्यसिद्धौ द्वित्राणि मण्डनमतनिराकरणपूर्वकं भगवत्पाद-सिद्धान्तसमर्थनानि प्रदर्श्यन्ते॥

व्यवहारदशायां भासमानं अनात्मवस्तुजातमाज्ञानिकमिति वेदान्त-राद्धान्तः। अज्ञानं किञ्चिदाश्रयते विषयीकरोति च। अज्ञानविषयो ब्रह्मेत्यत्र न विप्रतिपद्यन्ते। आश्रयेऽस्ति विमतिः। जीव आश्रय इति मण्डनाभिप्रायः। आह च ब्रह्मसिद्धौ 'यत्तु कस्याविद्येति? जीवानामिति ब्रूमः' इति। अनेकत्र मण्डनमतमनुसरन्त आचार्यवाचस्पतिमिश्रा अपि 'तदधीनत्वादर्थवत्' इति सूत्रभाष्ये 'परमेश्वराश्रया मायामयी महासुषुप्तिः' इति वचनेन यथाश्रुतं प्रतीयमानं ब्रह्माश्रयत्वमज्ञानस्य निरसिष्णवः 'तस्मा-ज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इति ईश्वराश्रया इत्युच्यते, नतु आधारतया, विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति व्याख्यन्। 'पारिशेष्यादात्मन एवास्त्वज्ञानं तस्याज्ञोऽस्मीत्यनुभवदर्शनात्। किंविषयं पुनस्तदज्ञानम्? आत्मविषयमिति ब्रूमः' इति नैष्कर्म्यसिद्धिवचने-नाज्ञानस्य समानाश्रयविषयत्वं सुरेश्वराचार्या मन्यन्ते। 'विद्याविधानाच्चाविद्या ब्रह्मण्यस्तीति गम्यताम्' इत्यादिना बृहदारण्यकभाष्यवार्तिके ब्रह्मैवाज्ञानस्या-श्रयो विषयश्चेति तैस्समर्थितं च। 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥' इति वदन्तः संक्षेपशारीरकाचार्या अपि मतमिदमुपोद्बलयन्। 'अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं' इति 'विशेषण-भेदव्यपदेशाभ्यां च नेतरौ' इति सूत्रस्थभाष्यानुगुणं चैतन्मतम्॥

'निश्चितेपि प्रमाणात्तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषा-दनुवर्तन्तेपि। तन्निवृत्तयेऽन्यदस्त्यपेक्ष्यम्। तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः,

यज्ञादयश्च शब्दप्रमाणकाः। अभ्यासो हि संस्कारं द्रढयन् पूर्वसंस्कारं प्रतिबध्य स्वकार्यं सन्तनोति। यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण।' इति वदन्तो मण्डनाचार्याः शब्दात्प्रमाणान्निर्विचिकित्सज्ञानोत्पत्तावपि मिथ्यादर्शनाभ्यासोपचितबलवत्संस्कारसामर्थ्यान्मिथ्यावभासानुवृत्ति, तन्निवृत्तये तत्त्वदर्शनाभ्यासं यज्ञादिकर्माणि च आसाक्षात्कारं करणीयानि मन्यन्ते। माण्डनमतमिदं 'केचित्स्वसंप्रदायबलावष्टंभादाहुः—यदेतद्वेदान्तवाक्यादहं ब्रह्मास्मीति ज्ञानं समुत्पद्यते। तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति। किं तर्हि? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनाप्रचयान्निःशेषमज्ञानमपगच्छति देवो भूत्वा देवानप्येति' इति श्रुतेः' इत्यादिना ग्रन्थेनानूद्य,

[1] सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्।
अज्ञानमागमज्ञानं सांगत्यं नास्त्यतोऽनयोः॥

इत्यादिना सुरेश्वराचार्याः निराचक्रुः। एतदुक्तं भवति। तत्त्वमस्यादिवाक्यजन्यनिर्विचिकित्सज्ञानोत्तरं तत्त्वदर्शनाभ्यासः, यज्ञादीनि च कर्माणि नापेक्षितानि। तेजस्तिमिरयोरिव ज्ञानकर्मणोर्विरोधात्, ज्ञानोत्पत्तौ तयोरसंभवात्। शब्दान्निर्विचिकित्सज्ञानोत्पत्तावपि प्रमेयासंभावनाविपरीतभावनारूपप्रतिबन्धनिरासद्वारा मनननिदिध्यासनयोरुपयोगः। निर्विचिकित्समागमिकं ज्ञानं नान्यत्किमप्यपेक्षतेऽज्ञानध्वस्तौ॥

[2] 'हेतुस्वरूपकार्याणि प्रकाशतमसोरिव।
विरोधीनि ततो नास्ति सांगत्यं ज्ञानकर्मणोः'॥

इति। निर्विचिकित्सशाब्दज्ञानकर्मणोरपि समुच्चयो नास्तीति भगवत्पादानां मतमेतेन समर्थितम्॥

ऊर्ध्वरेतसामाश्रमिणामिव गृहस्थानामपि विशुद्धा विद्योत्पद्यते। श्रवणादिरूपसाधनहीनत्वात् चिरेण चिरतरेण वोत्पत्तिस्तस्या ऊर्ध्वरेतसाम्।

1. नै. सि. १-६७ 2. नै सि. १-६६.

गृहस्थानां तु यज्ञाद्युपकृता शाब्दप्रमा शीघ्रं शीघ्रतरं वा साक्षात्कारं जनयति । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (३-४-२६) इति सूत्रस्याय-मर्थः—यद्यज्ञेन दानेनेत्यादिश्रवणात्कर्माण्यपेक्ष्यन्ते विद्यायामभ्यासलभ्यायामपि; यथाऽन्तरेणाप्यश्वं ग्रामप्राप्तौ सिद्ध्यन्त्यां शैघ्र्यायाक्लेशाय वाऽश्वोऽपेक्ष्यत इति । तमिमं मण्डनाभिप्रायं—

[1] प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥

[2] नित्यनैमित्तिकं कर्म सदैवात्मविशुद्धये ॥

इति सुरेश्वराचार्या निराचक्रुः । कर्माणि चित्तस्य शुद्धिद्वारा प्रत्यक्प्रवणतां संपाद्य कृतार्थानि निवर्तन्ते । न कथमपि ज्ञानसहभावः एषाम् । 'अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव । उत्पन्ना हि विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते, उत्पत्तिं प्रति त्वपेक्षते । कुतः ? तमेतं वेदानुवचनेनेत्यादिश्रुतिः यज्ञादीनां विद्यासाधनभावं दर्शयति । विविदिषासंयोगाच्चैषा-मुत्पत्तिसाधनभावोऽवगम्यते । यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते' इति भाष्यमप्येतदनुगुणम् । अबाधितं हि ब्राह्मणोऽहमित्यादिज्ञानं कर्माधिकारे निमित्तम् । निर्विचिकित्सशाब्दज्ञानेन तस्य बाधितत्वात्कुतः शाब्दज्ञानानन्तरं कर्माणि ? अतः शब्दादपरोक्षा-भ्युपगमे, अनभ्युपगमेऽपि शाब्दज्ञानफले भावनायां, तत्फले साक्षात्कारे, तत्फलेऽपवर्गे वा न कथञ्चिदप्यपेक्ष्यन्ते कर्माणि । एतेन गृहस्थानां यज्ञाद्यनुतिष्ठतां तदननुतिष्ठद्भ्य ऊर्ध्वरेतोभ्यः शीघ्रं शीघ्रतरं वा साक्षात्कारोदय इति वादः पराकृतः ॥

अद्वैतवेदान्तिषु मुक्तिविषये पक्षद्वयं गम्यते; एकः सद्योमुक्तिपक्षः, अपरः जीवन्मुक्तिपक्षः । नैष्कर्म्यसिद्धिकृतां सद्योमुक्तावेव पक्षपातोऽभ्यूह्यते ॥

1. नै. सि. १-४९. 2. नै. सि. १-५०.

[1] सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ।
सकृन्निवृत्तेर्बाध्यस्य किं कार्यमवशिष्यते ॥

इत्युक्त्या अविद्यातत्कार्यरूपसंसारस्य सम्यग्ज्ञानाग्निना बाधार्हस्य सर्वस्यापि बाधात्सद्योमुक्तिरुक्ता । अत्रेयं शंका समुन्मिषति — कस्तत्त्वोपदेष्टेति ? अज्ञोऽज्ञत्वादेव नोपदिशति । विज्ञस्य ज्ञानोत्पत्तिसमनन्तरमेव विगलित-वेद्यान्तरत्वेन शिष्यशासित्रादिभानापेक्षमुपदेष्टृत्वं कथं घटेत ?

[2] यथा स्वापनिमित्तेन स्वप्नदृक्प्रतिबोधितः ।
करणं कर्म कर्तारं स्वाप्नं नैवेक्षते स्वतः ॥

[3] अनात्मज्ञस्तथैवायं सम्यक्श्रुत्यावबोधितः ।
गुरुं शास्त्रं तथा मूढं स्वात्मनोन्यं न पश्यति ॥

इति सुरेश्वराचार्यैरेवास्याः शंकाया उत्तरं दत्तम् । स्वप्नद्रष्टा स्वाविद्यापरिकल्पितं चोरव्याघ्रादि पश्यन् बिभेति । ततः प्रतिबुद्धः स्वप्नकल्पितं स्वतो भिन्नं न पश्यति । तथानाद्यविद्यानिद्राधीनः स्वाविद्यापरिकल्पितेन तत्त्वविदाचार्येण तत्त्वमसीति प्रतिबोधितोऽविद्यानिद्रया विमुक्तः स्वविलक्षणत्वेन कल्पितं श्रुत्याचार्यादिकं नेक्षते । श्रुत्यादेरविद्याविलासत्वान्नाद्वैतव्याहतिः, नोपदेष्टृत्वा-द्यनुपपत्तिरिति । शंकेयं संक्षेपशारीरकेपि तथैव समाहिता — 'परिकल्पितोपि सकलज्ञतया गुरुरेव पूर्णमवबोधयति । परिकल्पितोपि मरणाय भवेदुरगो यथा ननु नभो मलिनम्" ॥ (२-२२७) इति श्लोकेन ।

सद्योमुक्तिं स्वाभिमतां प्रदर्श्य 'अथापरः सांप्रदायिकः —

[4] निवृत्तसर्पः सर्पोत्थं यथा कम्पं न मुञ्चति ।
विध्वस्ताखिलमोहोपि मोहकार्यं तथात्मवित्" ॥

---

1. नै. सि. ४-६९ 2. नै. सि ४-३६.
3. नै. सि. ४-३७. 4. नै. सि. ४-६०.

इत्यादिना जीवन्मुक्तिपक्षमपि न्यरूपयन्सुरेश्वराचार्याः। विद्योदये सह संचितेनाविद्या नश्यति। आगामि च नैव श्लिष्यति। प्रारब्धशरीरं च कर्म भोगेन क्षीयते। न यथेष्टचेष्टाचरणप्रसंगः। अतीतेष्वनेकजन्मसु प्रतिषिद्धवर्जनेन विध्यधीनप्रवृत्तितया च यथेष्टाचरणाभावेन तत्संस्कारस्य सुतरामभावात्। लोकत्रयाद्विरक्तो मुमुक्षुरपि न यथेष्टं चेष्टते। जीवन्मुक्तस्य तदभावः कैमुत्यसिद्धः। नहि मिष्टान्नभोजनपरिहृततृषः कदाचिदपि विषं जिघत्सति विवेकी। न मातृवधेनेत्यादीनि ज्ञानमाहात्म्यपराणि न स्वच्छन्दाचरणसाधकानि। सुरेश्वराचार्यैर्जीवन्मुक्तेः सांप्रदायिकत्वोक्तौ निमित्तमिदं यद्भाष्यकारैरियं समर्थिता। "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति (ब्रह्मसूत्रं ४–१–१५) सूत्रे भाष्यकारैः "अपि च नैवात्र विवदितव्यं ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्यते' इत्युक्तम्। ये तु भाष्यकारमाप्तं मन्यन्ते तान्प्रत्याहेति भामत्यवतारिकया जीवन्मुक्तौ स्वानुभवं भाष्यकारः प्रमाणयतीति गम्यते॥

सद्योमुक्तिवादिनस्त्वाहुः— ब्रह्मविदः शरीरधारणं न तद्दृष्ट्या तस्य ब्रह्मव्यतिरिक्ताभानात्। यद्यन्ये कल्पयन्ति कल्पयन्तु नाम स्वाविद्यया, न तेन मुक्तस्य कोपि संस्पर्शः। नच 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिश्रुतिः कथमुपपादनीयेति वाच्यम्। नहीयं श्रुतिः तत्त्वविदः शरीरपातप्रतीक्षां क्षेमप्राप्तेराचष्टे। किं तर्हि? यथा कश्चित् क्षिप्रतरं गम्यतामिति प्रेरितः क्षेपीयस्तां प्रतिपादयन्नाह 'तावदेव चिरं यत्स्नातो भुञ्जानस्याश्वं वा वहतः' इति, तथैवैतदपि। यदि क्षेमप्राप्तौ चिरतामात्रं विवक्षितं तर्हि तावदेवेति न ब्रूयाच्छ्रुतिः। अतो मन्यामहे ज्ञानोत्तरं विना विलम्बं मुक्तिरिति। विस्तरस्त्वाकरे द्रष्टव्यः॥

अहं ब्रह्मास्मीत्यादिमहावाक्येष्वभेदे सामानाधिकरण्यमिति सिद्धान्त औपनिषदानाम्॥

"सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनाम् ॥" (३–३)

इति वदन् नैष्कर्म्यसिद्धिकृदपि संमनुते । एतदनुसारिण्येव संक्षेपशारीरकोक्तिः–

सामानाधिकरण्यमत्र पदयोर्ज्ञेयस्तदीयार्थयोः
संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः ।
संबन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥ (१–१९७)

इति । परन्तु अहं ब्रह्मास्मीत्यत्र बाधायां सामानाधिकरण्यमपि वक्तुं शक्यत इति नैष्कर्म्यसिद्धिकाराः । यदाहुः —

योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीति धियाऽशेषामहंबुद्धिं निवारयेत् ॥ (२–२९)

इति । अहंबुद्धिनिवृत्तौ सर्वं द्वैतजातं निवर्तते तमोभावे फणीवेति तदाशयः ॥

पदवाक्यप्रमाणपारावारपारीणाः कर्मज्ञानकाण्डोभयपारगाः श्रीशङ्कर-भगवत्पादानां शिष्येषु वरिष्ठाः श्रीसुरेश्वराचार्यपादाः सर्वथा स्वाचार्यमतं समर्थयन्तो नैष्कर्म्यसिद्ध्यादिग्रन्थप्रणयनमुखेनाचार्यशिष्यानन्वगृण्हन् ॥

समग्रहीषं नैष्कर्म्यसिद्धेः कांश्चिद्यथामति ।
विषयानत्र लेखे, तमर्पये गुरुपादयोः ॥

---

# मानसोल्लासस्पर्शानुगुणो विचारः ॥

—श्री के. एस्. कृष्णमूर्तिशास्त्री,

श्रीकैलासनाथापरावतारतया शिष्टैः सम्प्रतिपन्ना जगद्गुरुपदयथार्थाभिधेयाः श्रीमच्छङ्करभगवत्पादा लोककल्याणकलनकुशलाः समचकलन्श्रीदक्षिणामूर्तिस्तोत्रं श्रुतिशिखरसिद्धान्तपरिबृंहितं मन्दमत्यनुजिघृक्षया परमिति विदुस्तरां सर्वेऽपि। तेषामन्तेवासिष्वधिकतरविद्यावैशारद्या इति प्रसिद्धाः सुरेश्वराचार्या निरमुः श्रीदक्षिणामूर्त्यष्टकस्य व्याख्यां कामपि वार्तिकरूपेण; यस्या एतस्याः सञ्ज्ञकास्ति यथार्थाभिधानं 'मानसोल्लासः' इति। सर्वतन्त्रस्वतन्त्राणां वार्तिकमधिकृत्यैतेषां विमृष्टुं नास्माकमधिकारः कोऽपि परिमितमतीनामथवा मन्दतरप्रज्ञानामथापि शङ्करकिङ्कराणां कतीनाञ्चन निदेशमनुरुध्यैव किञ्चिदिव स्पृशामः स्थालीपुलाकनीत्या; न तु विमृशामः। सोऽयं महान्साहसात्मकः क्षन्तव्यो व्यापार इति प्रथमं प्रार्थयामहे। ततः पूर्वं विपश्चिदपश्चिमानां संवादं लिप्सवः कमपि विचारं प्रवर्तयामः; य एषोऽभीष्टः स्यात्सुरेश्वराचार्याणां वार्तिकमुखादभिव्यञ्जयतां तत्त्वं श्रुतिशिखरसम्मतम् ॥

धर्मार्थकाममोक्षेषु मोक्ष एव परमः पुरुषार्थः। मुक्तः पुनः संसारी न भवतीत्यर्थिकया 'न स पुनरावर्तते' इति श्रुत्या तस्य नित्यत्वावगमात्। त्रयाणान्त्वितरेषां यत्कृतकं तदनित्यमिति व्याप्त्युपोद्बलितया 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति दृष्टान्तदार्ष्टान्तिकभावप्रदर्शनपुरस्सरं श्रुत्याऽनित्यत्वस्य प्रतिपादनात् ॥

अत एव मुख्यलक्ष्यभूतापवर्गापरपर्यायमोक्षप्रदायकतया प्रसिद्धो भगवान्भक्ताय धारयन्नपि मोक्षं हरिरन्तराले परमकरुणया प्रददाति स्वभक्तेभ्यस्त्रिवर्गत्वेन प्रख्यायमानान्धर्मार्थकामानप्यानुषङ्गिकानिति स्पष्टं भागवतादौ ॥

सोऽयं मोक्षोऽविद्यास्तमयलक्षणः। अविद्या च बन्धः। "अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः। [2] निवृत्तिरात्मा [1] मोहस्य ज्ञातत्वेनोपलक्षितः॥" इति वार्तिकेन मोक्षस्य सर्वदृश्योच्छेदोपलक्षितात्मरूपकैवल्यस्वरूपत्वावगमात्। नात्मविद्यातत्प्रयुक्तदृश्यत्वावच्छिन्नध्वंसः परं विद्याजन्यो मोक्षः; नित्यनिरतिशयपूर्णानन्दस्वरूपेणावस्थित्यात्मकः स इति ध्येयम्। अखिलजलमलविलयं कलयन्कतकरेणुरन्ते यथा स्वयमपि विलीयते; तथा अखण्डाकारवृत्तिरितरवृत्तीर्विध्वंस्यान्ते स्वयमेव नश्यतीति; तस्याश्चरमत्वमिदमेव, यदविद्यातत्प्रयुक्तदृश्यक्षणपूर्वत्वाभाववत्वनैयत्यं स्वोत्पत्तिक्षणस्येति निष्कर्षः। अस्या अव्यवहितोत्तरत्वेन ब्रह्मभावापत्तिरिति प्रक्रियैषा शास्त्रीया। "शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते। समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम्॥" (हरिपद्यमेतत्। अत्र शास्त्रपदं सर्वशास्त्रपरं; समारम्भपदं च तद्विवर्तपरम्) अत एव सकलजगदाकारेण परिणममानमायाधिष्ठानरूपत्वमुपवर्णितं तत्र तत्र ग्रन्थेषु। विशेषतश्चास्मिन्मानसोल्लासे भूयस्तराम्॥

सोऽयं मोक्षो भवति ब्रह्मज्ञानात्, "नान्यः पन्थाः" इति श्रुतेः। अत्र ब्रह्मज्ञानादित्यस्य ब्रह्मात्मैक्यज्ञानादित्यर्थः। तस्मादेव हि सः, न त्वात्मव्यतिरिक्तब्रह्मज्ञानात्। नात्मैक्यमित्यस्याभेद इत्यर्थः, किन्तु भेदाभावः। भेदत्वावच्छिन्नप्रतियोगिताकाभाव इति, त्रिविधभेदाभाव इत्यर्थो ग्राह्यः। अत एव "न वयमैक्यमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इत्युक्तं वाचस्पतिमिश्रैः॥

परिशीलनेन सर्वासामुपनिषदां (पदवाक्यप्रमाणैरविरोधेन) ब्रह्मव्यतिरेकस्य कथमपि प्रत्यगात्मन्यसिद्ध्या, द्वैतिभिरन्यैर्वा साधयितुमशक्यत्वमेवेति कृत्वा, निरुक्तज्ञानस्यैव मोक्षं प्रति प्रयोजकता कथिता; न तु व्यसनितयेति मन्तव्यम्। श्रुतिरपि 'तत् आत्मानमेवावेत्, अहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इत्याह। अत्र तत् इति बुद्ध्याद्युपाधिर्जीवः। अत्र तद्

इत्यस्य 'ब्रह्मभावी कश्चिदुपासकोऽर्थः' इति भर्तृप्रपञ्चादिकृतमपव्याख्यानमिति खण्डितञ्च भगवत्पादैः। विस्तरभिया नेह तन्यते। जीवस्य वास्तवो यो ब्रह्मभावः, तस्य स्फुरणाभावः स्वाभाविकः। अत्र स्वभावोऽविद्या; तत्कृत इति यावत्। अनया ह्यविद्यया नित्यसिद्धमपि, मुक्तत्वं शुद्धत्वं बुद्धत्वञ्च सच्चिदानन्दलक्षणस्य भूमपदवाच्यदिग्देशकालपरिच्छेदरहितस्य ब्रह्मणोऽद्वैतभावमापन्नस्य प्रतीच आत्मन आव्रियते। शास्त्राचार्योपदेशसंस्कृतान्तःकरणैकप्रयोज्यया ऽखण्डाकारवृत्त्या चरमयाऽपरोक्षसाक्षात्कारलक्षणया, द्विविधशक्तिमत्या अप्यविद्याया नाशे प्रकाशते स्वयमेव स्वं ब्रह्मस्वरूपं; ब्रह्मभावश्च प्रसीदतीति श्रौतविज्ञानसमुत्कर्षः॥

अन्तःकरणस्य संस्कारश्चात्र सूक्ष्मतमप्रत्यगात्मग्रहणसामर्थ्यापादनमेव; येनाखण्डाकारवृत्तिरुत्पत्तुमीशीत। इयमेव व्यपदिश्यते ब्रह्मविद्येति। अस्याश्चाविद्यानिवृत्तिव्यतिरेकेण नेतरः कोऽपि व्यापारः। अविद्यारूपावरणभङ्गे स्वयंप्रकाशादेव प्रत्यगभिन्नस्य ब्रह्मणः स्फुरणं, दीपेन तमोनाशे घटादेरिव सत इति शास्त्रमर्यादा। चरमवृत्त्या अपि नाशे ब्रह्मभावरूपः सर्वात्मभावः। अत उच्यते श्रुत्या 'ब्रह्मविद्ब्रह्मैव भवतीति'॥

ननु यो यं वेत्ति तस्य तद्भावापत्तिः कथं घटताम्? न हि वेत्ता घटादेर्भवति घटादितादात्म्यमापन्नः इति चेत् न, विषयत्वेन ह्यनात्मनां घटादीनां वेदनान्न तद्भावापत्तिः सेद्धुमर्हति। प्रतीचस्त्वात्मनो ज्ञातृस्वरूपाद्भेदाभावेन, न तद्भावानापत्तिरूपदोषावकाशः। द्वैतप्रपञ्चस्य कृत्स्नस्यापि जीवेश्वरजगद्रूपस्य तत्तद्गतभेदस्य च त्रिविधस्य; वस्तुतो ब्रह्मरूपे प्रत्यगात्मन्यविद्ययाऽध्यस्तत्वेन, अध्यस्तस्य चाधिष्ठानसत्तातिरिक्तसत्ताकत्वाभावेन, स्वाभेदस्येत्यस्य च स्वसत्तातिरिक्तसत्ताशून्यस्येत्यर्थेन, स्वाभिन्नसर्वात्मभावः श्रुत्युक्तः सामञ्जस्यमश्नुतेतराम्। एषैव ब्राह्मी स्थितिर्जीवन्मुक्तिरित्युच्यते। एतल्लक्षणादिकं, जीवन्मुक्तिविवेकादितोऽनुसन्धेयमिति नात्र प्रपञ्च्यते विस्तरभयात्। तथा

मायाया अविद्यापरपर्यायायाः श्रौतत्वं, सत्वं, अनादित्वं, भावरूपत्वं, स्वसमानविषयकज्ञाननाश्यत्वञ्चेत्यादिकमपि, विशेषतो ज्ञातव्यं ग्रन्थान्तरात्। एष एवामरणभावः सर्वात्मभावापत्तिरूपोऽमृतशब्देन कथ्यते श्रुतिषु। इदमेव निःश्रेयसात्मकं फलं सर्वोत्तममिति भण्यते मोक्ष इति। नेदं लोकान्तर-गमनवददृष्टं फलम्। 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिना ब्रह्म-वित्प्राणानां तदुपलक्षितलिङ्गशरीरस्य चोत्क्रान्त्याद्यभावस्य प्रतिपादितत्वा-दुपनिषद्भिः। 'अत्र ब्रह्म समश्नुते' 'य एवं विद्वानमृत इह भवति' 'न चेदिहावेदीन्महती विनष्टिः' इत्यादिभिर्मोक्षे दृष्टफलत्वस्य स्पष्टं प्रतिपादनात्॥

निरुक्तलक्षणमोक्षोपयोगिज्ञानाङ्गतयैवैषणात्रयत्यागलक्षणः संन्यासः, साध्यसाधनभावाद्विरक्तं प्रति संसाराद्विधीयते श्रुत्या, यो मुख्यः यज्ञोपवीतादि-कर्मसाधनपरित्यागात्मकः; सुतरां व्यतिरिक्तः स्मार्ताद्गौणात्संन्यासाद्यज्ञोपवीत-त्रिदण्डकमण्डल्वादिपरिग्रहणात्मकादिति स्पष्टं भाष्यादौ। न हि ब्रह्म-लोकादिप्राप्तेः ऋते, फलमात्मज्ञानरूपमर्हति सेद्धुं गौणस्य संन्यासस्य। हिरण्यगर्भोऽपि हि प्रथमजत्वेन प्रथितः संसारी परम इति वयमवगच्छामः, यतस्तस्यापि ग्रहातिग्रहरूपमृत्युग्रासादनिर्मोक एवेति हि भगवती प्राह बृहदारण्यकोपनिषत्॥

तस्माद्व्युत्थानमेषणात्रयात्संन्यासलक्षणं कृत्वा, श्रवणादिसाधनार्थं परमावश्यिकां शरीरस्थितिमपेक्ष्य भिक्षाचर्यं चरन् गुरुमभिगम्य, तच्छुश्रूषा-पुरःसरं श्रवणादि कृत्वा लभेतात्मज्ञानसम्पत्तिम्। ततश्च, तिष्ठासेद्बाल्येन ततो मुनिभावरूपमुपगच्छेन्मौनं ब्राह्मण इत्याहोपनिषत्। श्रवणञ्च विचाररूपं प्रश्नप्रतिवचनात्मकतया निर्वर्त्यमानं शिष्येण तत्त्वबुभुत्सुना, वादलक्षणं, यदेतत् ज्ञानं प्रति मुख्यमङ्गम्, कारणत्वात्। ज्ञानोत्पत्तिप्रतिबन्धकनिवृत्तिमात्र-प्रयोजकतया युक्तिभिरनुचिन्तनात्मकस्य मननस्य, विजातीयप्रत्ययानन्तरित-

सजातीयप्रत्ययप्रवाहरूपस्य निदिध्यासनस्य चाङ्गत्वेनाप्राधान्यमेवेति बोध्यम् । श्रुतौ पाण्डित्यमित्यस्य, गुरुपरिचरणपुरःसरं सर्ववेदान्तानां तात्पर्यावगम इत्यर्थः । बाल्यमित्यस्य अनात्मविषयकदृष्टितिरस्कार इत्यर्थः । मौनमित्यस्य च ब्रह्मैवाहमस्मि, नास्ति मत्तो व्यतिरिक्तं किञ्चनेत्यवधार्य वर्तमानत्वमित्यर्थः । ब्राह्मण्यञ्च महावाक्यार्थावगमरूपमित्यादि स्पष्टमानन्दगिरिणोक्तम् । एतदाप्त्यैव ब्राह्मण्यं भवति यथार्थनामवत्वाद्ब्राह्मणः कृतकृत्य इति; इतरथा ब्रह्मबन्धुरेवेति च प्रतिपादितमुपनिषत्सु, विनश्वरमन्यदार्तमिति च । ज्ञानसाध्यतया प्रतीतिमापाद्यमानो मोक्षोऽपि संसारवत्कल्पित एवाविद्यया; न तु पारमार्थिक इति, तस्यापि संसारात्मकत्वमेव; नित्यमुक्तत्वादात्मन इति न विस्मर्तव्यम् । अत एव 'जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः' इति पञ्चदश्यां तस्यापि संसारपदेनाभिधानम् ॥

ईदृशो ह्यमरणभावरूपावस्थालाभः सर्वेषां भवति प्राणिनां कामनाया निसर्गसिद्धाया विषय इत्यतिरोहितमेतत् ॥

अयं ह्यतितरां विस्मयावहो विषयः — यत् "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति भगवदनूदितमपि, "मरणं प्रकृतिः शरीरिणाम्" इति स्मारितमपि कालिदासादिभिः, प्रत्यक्षमहरहर्दृश्यमानमपि, सर्वोऽपि जन उपलभमानो हन्त! स्थास्नुमेवात्यन्तमात्मानं मनुते शरीरात्माभिमानपरिभूतस्तत्रापि विशिष्य मर्त्यनामान्वर्थभूतः पण्डितः पामरो वा । व्यवहारे हि नातिवर्तते पण्डितोऽपि संस्तिर्यगविशिष्टतामिति खलु चष्टे भगवान्भाष्यकारः "पश्वादिभिश्चाविशेषादिति"। शरीरसम्बन्धप्रयुक्तत्वेन निसर्गसिद्धमपि मरणभयं, न्यायप्राप्तमपि स्थगयतितरां खल्वात्मनित्यत्वबुद्धिर्बलवती । यस्या बलात्कलयति महान्तं कृत्यानां प्रारम्भं; तथा सन्ततचिन्तामपरिमितामनन्तकार्यक्रमविषयिकां सुदीर्घकालपर्यन्ताम् ॥

अत्रेदमाकूतम् — शास्त्रोक्तममरणभावस्वरूपं वेद वा न वा, तत्रेच्छा

परं बलवती जायते जनिमताम् । आशायाश्चायं स्वभावः, यत्स्वविषयप्राप्तौ शमनमिति । विषयस्यैव तु खपुष्पायमाणतायां, न तत्रोत्पत्तुमर्हति स्पृहा । अन्नपानीयरूपविषयस्यैवाभावे, बुभुक्षायाः पिपासायाश्चाशारूपायाः सर्वथा भवत्यसम्भव एवेति साम्प्रतं खलु वक्तुम् । भुजेः पातेश्चेच्छारूपे ह्यर्थे सन् । एवञ्च सर्वस्या अप्याशायाः स्वशमकविषयसत्त्वानुमापकत्वावश्यकत्वनैयत्यमित्ययं स्वभावः । अद्यतनं चन्द्रमण्डलगमनादिकमपि, चिरनिरूढवैज्ञानिकस्पृहायाः शमकात्मकविषयतया सिद्धमित्युत्पश्यामः । आस्तामेतत् ॥

ननु तत्तद्धर्मावच्छिन्नार्थनिरूपितशक्त्याश्रयैर्ब्रह्मण्यसाधारण्याभिप्रायेण प्रयुज्यमानैः ज्ञानघनः, सर्वान्तरः सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिभिः कथं बोधः शब्दैर्निर्धर्मकस्य ब्रह्मणः ? "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुत्या शब्दमनोवृत्त्यविषयत्वस्य प्रतिपादनात् । किञ्चिद्धर्मावच्छिन्नत्वे च ब्रह्मणः शब्दवृत्तेर्मनोवृत्तेश्च नियतमविषयत्वं सुदुर्घटमेवेति चेत्—न, शबले शक्तानां तेषां शब्दानां तत्तद्धर्मरहिते स्वरूपमात्रे लक्षणाया अभ्युपगमात् । तत्तच्छक्यतावच्छेदकावच्छिन्नत्वमेव शबलत्वम् । अत्र च, तात्पर्यग्राहकतया 'नेति नेति' 'नेह नानास्ति किञ्चने'त्यादीनामुपयोगः श्रुतिवाक्यानामित्यानन्दगिरिणैव बृहदारण्यकभाष्यव्याख्याने स्पष्टमुक्तत्वात् । यद्वा; निर्धर्मके ब्रह्मणि सधर्मकत्वबुद्धिर्भवतु विकल्पाख्यया वृत्त्या शास्त्रीयप्रक्रियामात्रोपयोगिन्या; यया बोधे सौकर्यं स्यान्निर्धर्मकस्यापि । शाब्दबुद्धौ योग्यताज्ञानस्य हेतुत्वमथवाऽयोग्यतानिश्चयस्य प्रतिबन्धकत्वं नाभ्युपेयते, फलबलात् । अत एव वह्निना सिञ्चतीत्यादेरपि वाक्याद्बोधोपपत्तिः । अत एवोक्तं — "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति कृतमधिकोक्त्या ॥

यत्त्वद्वैतिष्वेकदेशिनः 'तत्त्वमसि' महावाक्यमेतदुपादाय व्याचक्षते तदिति सर्वज्ञत्वविशिष्टमुच्यते चैतन्यम् । त्वमिति च किञ्चिज्ज्ञत्वविशिष्टम् ।

सर्वज्ञश्च मायोपाधिक ईश्वरः; किञ्चिज्ज्ञश्चान्तःकरणोपाधिको जीवः। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्युक्तेः। एवञ्च, विशेषण-विशिष्टयोस्तत्त्वंपदार्थयोरेकार्थबोधकत्वलक्षणमसिपदावगम्यमानं सामानाधिकरण्यं, तत्प्रयोजकाभेदस्य बाधान्न संभवतीति कृत्वा, विशेषणांशे लक्षणया भागत्यागरूपया, सिद्धयत्यखण्डं चैतन्यं महावाक्यार्थो मुख्यतात्पर्यविषय इति सिद्धं जीवेश्वरैक्यमिति ॥

अपरे तु, 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः'। यथा शिखी ध्वस्त इत्यादौ ध्वंसप्रतियोगित्वं विशेष्ये बाधादनेन न्यायेन विशेषणे शिखायां पर्यवस्यति? तथा विशेषणे बाधे, विशेष्यमात्रे पर्यवसानस्यौचित्येन, प्रकृते विशेषणयोः सर्वज्ञत्व-किञ्चिज्ज्ञत्वयोर्बाधे, विशेष्ययोश्चैतन्ययोरभेदस्य बोधः सम्भवतीति ॥

उभयमपि न रोचयामहे। तच्छब्दस्य हि परोक्षे विप्रकृष्टे च शक्तिः। 'इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्'। इत्युक्तेः, तच्छब्दस्य विप्रकृष्टे परोक्षे च ब्रह्मणि शक्तत्वाभ्युपगमस्यौचित्यात्। ब्रह्मणः प्रत्यगभिन्नस्य वास्तवत्वेऽपि परोक्षभ्रान्त्या 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुत्या प्रतिबोधितस्यापि सन्निहित-तमत्वरूपप्रत्यक्षत्वस्य तिरोधानपूर्वकं तद्विपरीतपरोक्षत्वस्य विप्रकृष्टत्वस्य च प्रतीत्या, तन्निवृत्तिपुरःसरं जीवात्मनि वास्तविकब्रह्माभेदस्य ब्रह्मभेदा-भावात्मकस्य प्रतिपादनं हि कृत्यं महावाक्यानां चतुर्णामपीति श्रुत्यन्तानां विषयो मुख्यः सर्वेषाम्। दशमस्त्वमसीत्यादिवाक्यैः शाब्दापरोक्षज्ञानोत्पत्तेरानु-भविकत्वादीदृशतत्त्वमसीत्यादिवाक्यानां ब्रह्मात्मैक्यज्ञानजनकत्वेन खलु महा-वाक्यत्वं स्फुरतितरामनर्गळम्; नेतरेषामतथाबोधजनकानां, ब्रह्ममात्रस्य जीवमात्रस्य वा स्वरूपं प्रतिपादयितुं प्रवृत्तानां वाक्यानामौपनिषदानामपीति निष्कर्षः। असाधारणतया सिद्धः समुत्कर्षश्चतुर्णामेवैषां महावाक्यानामित्ययञ्च स्फुटतरं प्रत्यपादि यथाश्रुतियुक्त्यनुभवं तैत्तिरीयोपनिषत्सायणभाष्येऽपि ॥

एवञ्च पदशक्त्यनुरोधेनैव वाच्यः पदार्थः; तथा, यथाशाब्दिक-प्रक्रियं वाक्यशक्तिबलेन वाक्यार्थश्चेति; तत्त्वमसीत्यत्र, तच्छब्दस्य परोक्षत्वावच्छिन्नं चैतन्यमर्थः। त्वंपदस्य च प्रत्यक्षत्वावच्छिन्नं चैतन्यमर्थः। युष्मदः संबोध्यचेतने शक्तेः प्रसिद्धत्वात्। स्वावच्छिन्नचैतन्येऽध्यस्तत्वात् सर्वेषाम्। अर्थगतस्येव तत्तच्छब्दगतस्यापि धर्मस्य सर्वस्याविद्यारूपत्वस्या-विद्यकरूपत्वस्य वा कैयटादिभिर्हर्यादिभिश्च स्फुटं प्रतिपादनात्। परोक्षत्वादिकं जातिरुपाधिर्वेति तु नात्र विचारार्हं। यतो, घटोऽयं घटोऽयमित्यादि-व्यवहारेण व्यवहर्तव्यतावच्छेदकतया घटत्वाख्यधर्मस्य सिद्धावपि, सम-वायस्यैवासिद्ध्या समवेतत्वादिघटितजातिलक्षणाङ्गीकारे प्रमाणाभावादित्यादि प्रपञ्चितं ग्रन्थान्तर इति नात्रावसरो विस्तरस्य ॥

एवञ्च, शब्दशक्तिबलात्प्रतीयमानयोः परोक्षत्वप्रत्यक्षत्वयोः, परस्पर-विरुद्धयोःअसिपदप्रतिपाद्यसामानाधिकरण्यान्यथानुपपत्त्या तत्त्वंपदयोः तद्रहिते-ऽखण्डे चैतन्ये तात्पर्यवशाल्लक्षणा भागत्यागलक्षणात्मिका स्वीक्रियते। विशेषणे बाधे विशेष्यमात्रेऽभेदः पर्यवस्यत्यबाधादिति शक्तिरेव वेति कथं भवेदञ्चितम् ॥

'स आत्मा तत्त्वमसि' इत्यत्र तच्छब्दात्मशब्दाभ्यां ब्रह्मणः प्रतीचश्चैव क्रमेणोक्तत्वाच्च, नात्राप्रकृतस्येश्वरस्य मायाशबलस्य युक्तं ग्रहणम्। एतदतिरिक्तेषु 'अहं ब्रह्मास्मि' इत्येतादृशेषु त्रिष्वपि महावाक्येषु, ईश्वर-परामर्शस्य सुतरामभावाच्च ॥

सोपाधिकनिरुपाधिकयोरुपाधिपरित्यागेन जीवब्रह्मणोरैक्यरूपभेदाभाव-बोधकत्वात्मकत्वमेव महत्त्वं 'तत्त्वमसि' मुखानां वाक्यानां चतुर्णां। नेतरेषां ब्रह्ममात्रस्य प्रत्यङ्मात्रस्य वा स्वरूपं प्रतिपादयतां वाक्यानामित्यवोचाम। एवञ्च, 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किञ्चन' इत्यादीनां 'दृष्टेर्द्रष्टा' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो

विद्यते' इत्यादीनां च उपनिषद्वाक्यानां 'ओमित्येकाक्षरं ब्रह्म' 'ओं तत्सदिति निर्देशः' इत्यादिस्मृतिरूपगीतावाक्यानाञ्च महावाक्यत्वमव्याहतमतो महावाक्यानां नैवेयत्तेति वदन्तो ये वत ! ते मान्याः। अभयरूपपरमफलाजनक-ज्ञानजनकत्वाच्चतुरितरवाक्यानाममहावाक्यत्वे स्फुटं प्रतिभासमानेऽप्याग्रहेण तत्साधयितुं प्रवृत्ता नैव स्युर्निवर्त्याः। नहि जीवब्रह्मैक्यज्ञानादृते प्राप्तिरभयस्य संभवतीति निभालयन्तु सुधियः। एवं सति, महावाक्यत्वाभावः मृग्यमाणः कुत्रापि न भवेदित्यलम् ॥

एतेन, त्यदादीनां बुद्धिविशेषविषयतत्तद्धर्मावच्छिन्ने शक्तिः। नच हर्यादिपदानामिव नानार्थतापत्तिः। अननुगतनानाधर्मावच्छिन्नार्थनिरूपित-नानाशक्तिमत्त्वं वा तन्निरूपितैकशक्तिमत्त्वं वा नानार्थकत्वम्। त्यदादीनां तु न नानार्थत्वम्। तत्तद्धर्माणां, बुद्धिविशेषविषयतावच्छेदकत्वेन धर्मेणोपलक्षण-भूतेनानुगतस्य संभवात्। बुद्धिविशेषस्योपलक्षणत्वेन तस्य पदजन्यपदार्थस्मृतौ न भानापत्तिः। तथा च, घटादिशब्दैर्यथा घटत्वादिनैवोपस्थितिस्तथैव तदादिशब्दैरपि तत्तद्धर्मावच्छिन्नोपस्थितिर्निर्बाधैवेति; तत्त्वमसीत्यादौ ईश्वर-पदेनेव तत्पदेनेश्वरत्वप्रकारकपदार्थज्ञानं; तथा जीवपदेनेव त्वंपदेनापि पदार्थ-ज्ञानं, तत्पूर्वकवाक्यार्थज्ञानरूपश्च शाब्दबोधः। एवञ्चोक्तरीत्या सिद्ध्यति जीवेश्वरैक्यमिति, केषाञ्चन महतामपि सतां, तत्त्वमसीत्यादिवाक्यार्थकथनं परं प्रौढ्यैवेत्यवधेयम्। जीवेश्वरैक्यस्याप्रकृतत्वाच्छाब्दोऽग्य इत्यलम् ॥

पदपदार्थयोस्तादात्म्यस्येव, तत्त्वमसीत्यादौ वाक्यवाक्यार्थयोरपि प्रमाणसिद्धस्य तस्याध्यासिकत्वमेव लक्ष्यार्थयोरिति मतं वैयाकरणानाम्। वाक्यार्थत्वं विशेषणविशेष्यभावस्यैव भेदसंसर्गावच्छिन्नस्य तदनवच्छिन्नस्य वा सम्बन्धस्य, नातिरिक्तस्य कस्यापि। तत्रैवापूर्वं वाक्यस्य शक्तिः। तस्य शक्यत्वेऽपि संसर्गतयैव भानं न प्रकारतया। कष्टं श्रित इत्यादौ क्रिया-कर्मभावरूपकारकसम्बन्धस्य द्वितीया वाचिका; राज्ञः पुरुष इत्यादौ

स्वस्वामिभावस्य षष्ठी वाचिकेति भाष्यानुरोधेन संबन्धस्य द्वितीयादि-वाच्यत्वाभ्युपगमेऽपि, संसर्गतयैव भानं, तथा भाने शब्दवाच्यत्वमप्रतिबन्धक-मिति च स्वीक्रियते। तथैव विशेषणविशेष्यभावलक्षकस्यापि निरुक्तोभय-रूपस्य वाक्यार्थत्वेऽपि, न प्रकारतया भानमित्यवगन्तव्यम्। राज्ञः पुरुष इत्यादौ विशेषणविशेष्यभावो भेदसंसर्गावच्छिन्नः। राजा पुरुष इत्यादौ तु तदनवच्छिन्नः सः। न त्वभेदसंसर्गावच्छिन्नः, अभेदस्यासंबन्धत्वात्॥

तत्त्वमसीत्यादावपि, भेदसंबन्धानवच्छिन्न एव विशेषणविशेष्यभावः; लक्ष्यार्थयोस्तादात्म्यवदाध्यासिक ऐक्येऽष्टव्यो वाक्यार्थत्वान्यथानुपपत्त्येति युक्तम्। तादात्म्यस्य धर्मत्वमेव, तदात्मनो भावस्तादात्म्यमिति स्वारसिकव्युत्पत्त्या घटत्वादेरिव यथापदशक्ति स्वीकर्तव्यम्। न तु तस्य कथमपि संबन्धत्वम्। संबन्धो हि भवितुमर्हति भिन्नः संबन्धिभ्यां द्विष्ठश्चेति; धर्मरूपस्यैतस्य संबन्धत्वं, भेदाभेदघटितत्वादिकं च कथमपि शब्दमर्यादया दुरुपपादमेवेति सुधियो विभावयन्त्विति कृतं बहुना॥

---

# तैत्तिरीयवार्तिकम् (ब्रह्मवल्ली) ॥

–एन्. एस्. कृष्णशास्त्री,

॥ श्रीशारदा विजयते ॥

अस्ति समस्तजगति प्रथिताभिधानं तुङ्गापगासङ्गमसङ्गतसौभाग्यभूमावहं ऋष्यशृङ्गमुनिपुङ्गवसहवाससञ्जातदिव्यवैभवं शृङ्गगिर्याख्यं परमपवित्रं क्षेत्रमतिचित्रम् । यत्र किल श्रीशङ्करभगवत्पादकरकमलकलितसांनिध्या सकललोकहितकारिणी वाणीविग्रहा विद्याधिदेवता देवी विराजते शारदा । यदभ्याशे सुशोभते श्रीशङ्करभगवत्पादप्रतिष्ठापितदक्षिणाम्नायपीठाभिधानशारदापीठाधिष्ठितगुरुपरम्पराप्रथमगणनीयानां श्रीशङ्करकिङ्करीभूतानां तस्यैव श्रीशङ्करगुरोरन्तेवसतामग्रगण्यानां श्रीसुरेश्वराचार्याणां प्रतिष्ठितमधिष्ठानम् । तत्राद्य,

'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्' ॥

इति भागवतीं सूक्तिमनुसृत्य यत्र विभूतिरतिशयिता विलोक्यते तत्र पतति मनो जनानामिति नीतिमुररीकृत्य चास्तिकानामपि जनानामान्तरं सारमचिन्तयतां बहिराडम्बररममाणानां भक्तिश्रद्धासंवर्धनकाम्यया स्वस्य च परमगुर्वादरातिशयवशीकृतताव्यञ्जनाय च तेषामेषामाचार्यवर्याणामधिष्ठानस्य परिष्करणे बद्धश्रद्धाः श्रीशृङ्गगिरिगुरुपरम्परायामद्य विद्योतमानाः श्रीमदभिनवविद्यातीर्थगुरुचरणाः आलयमेतत्परिष्कृत्य कुम्भाभिषेकमहोत्सवमस्य कारयिष्यन्तीति वृत्तान्तमिममधिगम्य सन्तोषपरीताः तत्तादृशे सुशोभनेऽस्मिन्नवसरे तेषां गुरुवर्याणामपदानं किमपि वाचा प्रकीर्त्य कृतार्थमात्मानमाकलयितुकामाः

'आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥' इति वाचस्पतिसूक्तिमनुचिन्त्य सुरेश्वराचार्यविरचिततैत्तिरीयोपनिषद्भाष्यवार्तिकविवरणाय यथामति प्रयतामहे ॥

एवं हि वार्तिकस्यास्य समुद्भवनिमित्तं माधवीये शङ्करविजये प्रस्तुतमवगम्यते । तद्यथा — श्रीशङ्करभगवत्पादो ग्राहग्रहविमोक्षापदेशेन मातुरनुमतिमादाय स्वयं मनसा गृहीतसंन्यासोऽपि गोविन्दभगवत्पादमासाद्य ततो यथाविधिगृहीतोपदेशस्तदादेशादेव बादरायणविरचितब्रह्मसूत्राणां भाष्यं प्रणीय तद्विवरणकाम्यया स्वमतिसंवादाय च कुमारावतारभूतेन कुमारिलभट्टेन वार्तिकमस्य करणीयमिति मनीषया प्रयागक्षेत्रमागत्य यावत्पश्यति तावत् स्वकृतगुर्वपचारपरिहाराय तुषानलसंनिविष्टं भट्टपादमालोक्य तदा तस्यैतस्मिन् प्रवर्तनमशक्यमाकलय्य तन्निदेशेन माहिष्मतीमागत्य भट्टपादशिष्येण परमेष्ठिप्रतिमूर्तिना मण्डनपण्डितेन सङ्जगाम । तदनु तदानीन्तनं कर्ममीमांसकं तं वादे विजित्य वादारम्भकृतपरस्पराश्रमपरिग्रहसमयानुरोधेन तस्मै दत्वा तुरीयमाश्रमं तं सुरेश्वराभिधानं विधाय स्वान्तेवसताभन्यतमं तं परिजग्राह च । तदनन्तरसमयान्तरे तेन वार्तिककरणप्रस्तावे चिरकालात् कर्माध्वनिबद्धश्रद्धोऽयं भाष्यमिदमद्वैताध्वनो विध्वंसयेदिति सन्दिग्धबुद्धिभिः पद्मपादादिभिरन्यैर्निरुद्धाभिप्रायस्तेषां बुद्धिमनुरुध्य सुरेश्वरबुद्धिपरिशुद्धिकरणायेत्र स्वीयशाखान्तर्गततैत्तिरीयोपनिषदः तदीयकाण्वशखान्तर्गतबृहदारण्यकोपनिषदश्च भाष्यस्य वार्तिककरणे तं प्रचोदयामास च । यद्यपि तत्राप्ययं दोषः स्यादेव—यथा तयोरपि भाष्ययोरद्वैतप्रतिष्ठापनपरयोः वार्तिकेनानेनान्यथानयनं कुतो न संभाव्येतेति, तथापि श्रुत्यभिप्रायस्यान्यथा व्याख्यानेऽपि न्यायेन तदर्थविनिर्णायकब्रह्मसूत्रतद्भाष्ययोः सद्भावात्ताभ्यां श्रुतितत्त्वार्थावगतिः संभाव्यते, सूत्रभाष्यस्यैव दुर्व्याख्याने न पुनरपरः सरणिस्तत्त्वाधिगम इतीव श्रीशङ्करगुरोराशयोऽस्माभिरुन्नीयते । स च गुरुनिदेशं शिरसा वहन् वार्तिकमिदं रचयामास ॥

अत्रेदं माधवीयं वचनम् — 'सत्यं यदात्थ विनयिन्मम याजुषी या शाखा तदन्तगतभाष्यनिबन्ध इष्टः। तद्वार्तिकं मम कृते भवता प्रणेयं सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ तद्वत्त्वदीया खलु काण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम्। तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ॥' इति। सतीर्थ्यानामपार्थमिममभिप्रायं परिज्ञाय तेषु गृहीतमात्सर्य इवाचार्यवर्योऽयं श्रीशङ्कराचार्यमर्यादयैव महता प्रयत्नेन वार्तिकेऽस्मिन्नद्वैत-सिद्धान्तमत्यन्तादरेण समर्थयामास। प्रस्तुते वस्तुनि वस्तुतो विचार्यमाणे वार्तिककारोऽयं भाष्यकारमप्यतिशेत इति तद्वार्तिकपरीक्षकाणामपरोक्षमेतत्। यतो न केवलं श्रुतितः, अपितु न्यायेनापि तत्तदर्थसमर्थनं कुर्वन् सतीर्थ्या-नामपार्थमभिप्रायमापादयितुं ग्रन्थस्यास्य सूत्रभाष्यानुकारितामेव व्यञ्जयतीत्यय-मर्थो ग्रन्थारम्भ एव सम्भाव्यते। तथाहि प्रारम्भवार्तिकम् —

'तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः।
विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते' ॥ इति।

अयमस्याः सूक्तेराशयः—उपनिषदर्थस्य यथावत्प्रकाशकस्य भाष्यस्य का नाम व्याख्यापेक्षेति शङ्कमानानां व्याख्यानप्रयोजनमिदं प्रदर्शयति विस्पष्टार्थरुचीनामिति। ततश्च सन्देहविपर्यासाभ्यां अस्पष्टप्रतिपन्नभाष्यार्थानां न्यायेनापि तदर्थप्रतिपादनेन विस्पष्टभाष्यार्थप्रतिपत्तये व्याख्येयं मयाऽऽख्यायत इति। सोऽयमर्थः 'हिशब्देनास्या व्याख्यायाः न्यायसन्दृब्धत्वेनोपनिषत्तद्भाष्यार्थ प्रकटीकरणसामर्थ्यं द्योत्यते' इति तत्रत्यानन्दगिरिव्याख्याने स्पष्टसंनिविष्टः। इदमप्यस्य वार्तिकत्वप्रयोजकमवश्यमपेक्षितम्; यत उक्तानुक्तदुरुक्तानां चिन्तनं हि वार्तिकमभिप्रयन्त्यभिज्ञाः। ततश्च भाष्योक्तानामर्थानां तदनुक्तैः न्यायैः स्थान एव समर्थनम्। इदमपि वार्त्तिकप्रारम्भे द्वितीयश्लोकचतुर्थपादे 'भक्त्या पूज्यतमं प्रणम्य तमहं तद्भाष्यनीतौ यते' इत्यत्र ग्रन्थकारेण प्रतिज्ञातमस्ति। तत्र हि 'तद्भाष्यनीतौ यते' इति पदमादाय 'तेन गुरुणा कृतस्य तैत्तिरीयक-

S. S. 6.

भाष्यस्य नीतिः नयनं विभजनं तत्राहं यते यत्नं करोमि दुरुक्त्यादिनिरूपणरूपं वार्तिकं संपादयामीति संवन्धः' इति व्याख्यायानन्दगिरिमहाशयाः 'उक्तानुक्तचिन्ता तावदिह सुघटैव, दुरुक्तचिन्ताऽप्यापाततो घटते' इति ग्रन्थेन वार्तिकत्वमस्य सुघटितं व्याचख्युः ॥

तत्र चोक्तविधया उक्तानुक्तचिन्तात्मकत्वमस्य सुव्यक्तं, परन्तु दुरुक्तिविचिन्तनात्मकत्वं कथमस्य घटत इत्यत्र नो विप्रतिपत्तिरेव समुल्लसति। यतः 'गोविन्दशिष्यस्य कथं दुरुक्तं' इत्यभियुक्तोक्त्या यत्र भाष्ये शब्दतो दुरुक्तमपि न संभाव्यते, न च शक्यते सम्भावयितुं तत्र कथमर्थतो दुरुक्तं समर्थयितुमिह शक्यम्। अत एव किल 'दुरुक्तचिन्ताप्यापाततो घटते' इत्यानन्दगिर्युक्तिरत्र युक्ता। अत एव हेतोरिति मन्यामहे वयं वार्तिककारोऽपि ग्रन्थमिमं वार्तिकनाम्ना न व्याजहार, अपि तु वदति 'व्याख्येयं संप्रणीयते, तद्भाष्यनीतौ यते' इति च। अतश्चेदं विनिश्चिनुमो यत् — व्याकरणशास्त्रे यथोत्तरं मुनीनां प्रामाण्यमिति व्यवस्थया सूत्रकारादपि वार्तिककारस्य प्रामाण्यनिर्णयात् उक्तानुक्तदुरुक्तचिन्तनात्मके वाररुचवार्तिके मुख्यवृत्तेः वार्तिकशब्दस्य गौणवृत्त्या प्रयोगः प्रकृते ग्रन्थ इति। न चैवं सति — 'तद्वार्तिकं मम कृते भवता प्रणेय'मिति भाष्यकारेण वार्तिकनामकरणमस्य कथं कृतमिति शङ्कावकाशः। मद्भाष्योपरि दुरुक्तिचिन्तनमपि सुरेश्वरः करिष्यति नवेति परीक्षणाय तथा व्यवहारः कृत इति शक्यमध्यवसातुम्। एवं चात्र गुणतोऽपि प्रवृत्तिनिमित्तं दुरुक्तिचिन्तनमिव कृतं वार्तिककारेणेत्येतदुपरिष्टात् स्पष्टीकरिष्यामः। अधुनातु उक्तानुक्तचिन्तनात्मकत्वं कैश्चनोदाहरणैरस्य प्रदर्शयामः ॥

तथाहि — 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मवल्ल्या व्याख्यानप्रारम्भे पूर्वं शिक्षावल्ल्यां कर्मभिरविरुद्धानि संहितादिविषयाणि उपासनान्युक्तानि, अनन्तरं च व्याहृतिद्वारेण स्वाराज्यफलकमन्तःसोपाधिकात्मदर्शनमप्युक्तं, तथापि

नैतावता संसारबीजस्य निःशेषनिवृत्तिः स्यात्, अतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्यर्थं निर्विशेषात्मदर्शनार्थमियं वल्ली प्रारभ्यत इति तदवतरणभाष्यार्थं 'यावन्त्युपासनान्यादावविरुद्धानि कर्मभिः' इत्यारभ्य त्रिभिः श्लोकैः —

'न चैतावदवष्टम्भात्कामकर्मोद्भवत्वतः ।
सर्वानर्थैकबीजस्य मोहस्यास्ति निराक्रिया ॥

इति द्वितीयश्लोकोक्तन्यायेन, तद्यथा — स्वयं कामस्य कर्मणश्चोत्पत्तिहेतोरज्ञानस्य न कर्मणा निवृत्तिः युक्ता, अपितु अज्ञानविरोधिना विज्ञानेनैव तन्निवृत्तिः स्यादित्येवमात्मकेन व्यवृणोत् । इदमुक्तचिन्तनं नाम भवति ॥

तदनु — 'नित्यकर्माद्यनुष्ठानाच्छुद्धान्तःकरणः पुमान् ॥

इत्यारभ्य कतिचिच्छ्लोकैः साधनचतुष्टयसंपन्नः ज्ञानसाधनश्रवणादावधिकारी तत्र भाष्ये अनुक्तो निरूपितः । तत्रापि च 'त्याग एव हि सर्वेषां ज्ञानसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ॥' इत्याद्यैः श्लोकैः संन्यासस्याधिकारिविशेषणताप्राधान्यं च सप्रमाणमुदाहृतम् । एतदनुक्तस्याप्यपेक्षितस्यार्थस्य चिन्तनम् । तत्र च —

'नित्यकर्माद्यनुष्ठानाच्छुद्धान्तःकरणः पुमान् ।
विरक्तश्चाग्रजाल्लाभात् स्वमतुल्यादिलाभवत्' ॥

इति श्लोकेन शिक्षावल्युपदिष्टानामुपासनसमुच्चितानां कर्मणां कामिनां अभ्युदयफलार्थत्वेन चोदितानामपि फलनिरपेक्षमनुष्ठितानां सत्त्वशुद्धिद्वारा ज्ञानोत्पत्तिहेतुत्वस्य 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति श्रुतिप्रमाणकस्यार्थस्य भाष्यानुक्तस्याप्यपेक्षितार्थस्य सूचनमप्यनुक्तार्थचिन्तनमेव संपद्यते ॥

तदनु च — 'प्रत्यक्षागमलिङ्गैर्हि यद्यत्कर्मोद्भवं फलम् । तत् क्षयिष्णिवति विज्ञाय विरक्तो नरकाद्यथा ॥' इति तदनन्तरश्लोकेनोक्तचित्तशुद्धेः

फलस्य विवेकस्य च वैराग्यस्य 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' इति श्रुतिप्रमितस्य प्रतिपादनं, तद्द्वारा विद्याप्रकाशनार्थप्रवृत्तायामस्यामुपनिषदि शिक्षावल्ल्यां कर्मणां प्रस्तावस्य उक्तविधया ज्ञानार्थत्वफलसूचनमपि तथानुक्तार्थविचिन्तनमेव। एवं प्रतिश्लोक-विवरणमनवसरप्राप्तमित्यतो दिङ्मात्रमत्रोदाहृत्येतः परमन्यत्र चरामः॥

एवं 'ब्रह्मविदाप्नोति पर'मित्यादावेवोपनिषदि विद्याफलकीर्तनस्य श्रोतुः प्रवृत्तिसिद्धिः फलमिति भाष्योक्तस्यार्थस्य — अविद्योद्भूततृष्णेन पुंसा यत्कल्पितं फलम्। अनन्तफलसिध्यर्थं तदनूक्तिः प्रवृत्तये॥' इत्याद्यैः श्लोकैः विवरणानन्तरं तस्यैवार्थस्य समर्थनं — 'शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब। मातेव प्रेरयेद्बालं सदसंभाव्यसिद्धये (ज्ञानातिरिक्त-साधनान्तरासंभाव्यमोक्षसिद्धये इत्यर्थः) इति भाष्यानुक्तदृष्टान्तेन, 'लौकिकी वैदिकी चाथ प्रवृत्तिर्येह काचन। नर्ते प्रयोजनं यस्मात् तदेवातः प्रवृत्तिकृत्॥' इति श्लोकेन 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति भाष्यानुक्तन्यायेनापि कृतम्। एवमेव तत्र तत्रापेक्षितैः सरसैरुदाहरणैः समीचीनैर्न्यायैरपि भाष्यार्थस्य विवरणं स्वग्रन्थस्य सूत्रभाष्यानुकारितामाकारयति, पूर्वोक्त-सन्देहविपर्यासनिरासेन विस्पष्टभाष्यार्थप्रतिपत्तये च प्रकल्पत इति पूर्वमेवावेदित-मस्माभिः॥

एवं 'अन्नात्पुरुष' इति श्रुत्यर्थविवरणे — 'अदनार्हं तथान्नं च ताभ्यः समभिजायते। अथादन्नाद्रसोत्पत्तिः शोणितं जायते रसात्॥' इत्यारभ्य 'घनादङ्गाभिनिष्पत्तिः केशरोमाणि चाङ्गतः' इत्यन्तैः श्लोकैः पुरुषशरीरोत्पत्ति-प्रकाशनेन गर्भोपनिषदर्थस्य यत्समर्थनं कृतं तदपि भाष्यानुक्तार्थसमर्थनमेव। न च तदनपेक्षितमपितु प्रेक्षावतां परीक्षणायैव व्याचचक्षे तद्विचक्षणः सुरेश्वरः। यतो विरक्तस्यैवैहिकादामुष्मिकाच्च भोगात् ब्रह्मविद्यायामधिकार इति स्थितिमास्थायोक्तप्रकारेण परिनिष्पन्ने शरीरे 'पूर्वजन्मनि यान्यासन् भूतानि

करणानि च । तान्येवेहापि देहाय तद्यथेति श्रुतेर्बलात् ॥' इति श्लोकेन करणानामभिव्यक्तिमुक्त्वा तदनु — 'समग्रकरणस्यास्य नवमे मासि देहिनः । व्यतीतानेकजन्मोत्था व्यज्यन्ते वासनाः क्रमात् ॥ आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंस्कृतः । हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ ॥' इत्याद्यैः बहुभिः श्लोकैः गर्भवासतन्निष्क्रमणतदनन्तरबाल्यकौमारयौवन-वार्धक्यावस्थास्वनुभूयमानविविधदुःखानुवर्णनेन 'विरक्तितीव्रत्वनिदानमाहुर्भोग्येषु दोषेक्षणमेव सन्तः' इति भगवत्पादीयविवेकचूडामणिसूक्त्युक्तरीत्या वैराग्योदयहेतुत्वमेतस्य सम्यगुपवर्णितं ग्रन्थकारेण ॥

एवं क्रमशः परिचिन्त्यमाने उक्तानुक्तचिन्तनं बहु सन्ततमेवात्र सन्दृश्यते । तत्र किमेतैः परिमितैरुदाहरणैः ? यदन्ते 'यतो वाचो निवर्तन्ते' इति श्रुतिव्याख्यानावसरे — यत्र शब्दः प्रवर्तते अतीन्द्रियेऽप्यर्थे तत्रैव मनःशब्दोदितस्य विज्ञानस्यापि प्रवृत्तिः, यत्र च विज्ञानं तत्रैव च शब्दोऽपीति सहैव वाङ्मनसोः प्रवृत्तिः सर्वत्र । तदिहैकनिवृत्तावपरमपि निवर्ततेऽतो मनोवाचामगोचरं ब्रह्मेत्युच्यत इति भाष्योक्तमर्थं— 'शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसम्भवात् । शब्दार्थासंभवं प्राह ह्यप्राप्येत्यादराच्छ्रुतिः ॥' इति श्लोकेन शब्दस्यार्थे प्रवृत्तिहेतूनां जातिगुणक्रियासम्बन्धानामभावात् शब्दप्रवृत्तेरसम्भव इति, 'उदपादि च यच्छब्दैर्ज्ञानमाकारवद्धियः । स्वतो बुद्धं तदप्राप्य नाम्ना सह निवर्तते' इत्यनेन शब्दाविषयत्वादेव ज्ञानस्याप्यविषय आत्मा इति च व्याख्याय 'माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति । सुषुप्त इव निद्राया दुर्बलत्वाच्च बाध्यते । अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥' इत्याद्यैर्वचनैः सुप्तः पुरुषः 'देवदत्तोत्तिष्ठ' इति परैर्बोधितः शब्दतदर्थतात्कालिकस्मरणाभावेऽपि शब्दोत्थविज्ञानादेव निद्रां विधूय प्रबुध्यते यथा तथा प्रकृतेऽपि शब्दशक्त्यविषये आत्मनि शब्दार्थसम्बन्धग्रहणानपेक्षणेऽपि लक्षणावृत्त्या तत्त्वमसि, सत्यं ज्ञानमित्यादिशब्दोदितादेव विज्ञानादविद्यां विधूय परमात्मनि प्रति-

तिष्ठतीत्यपि भाष्यार्थं विवृत्य तदनन्तरं — 'अवशिष्टं स्वतो बुद्धं शुद्धं मुक्तं ततो भवेत् । नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥' इत्यारभ्य 'कैवल्यकारिता बुद्धेर्नियोगादेव चेद्भवेत् । नियोगार्थावगतये नियोगोऽन्योऽपि मृग्यताम् ॥' इत्यन्तैः शताधिकैः श्लोकैः ज्ञानेनाज्ञाननिवृत्त्याख्यकैवल्यप्राप्तये आत्मनि विषये तज्ज्ञाने परोक्षापरोक्षात्मके वा कथमपि नियोगो न सम्भवतीति प्रकृतब्रह्मवल्या निर्विशेषात्मपरत्वस्य भाष्यकाराभिमतस्य प्रसाधनाय विधिपरत्वनिराकरणं यत्कृतं तदेतद्भाष्यानुक्तार्थचिन्तनविषये प्रथमगणनामर्हतीति शक्यते वक्तुम् ॥

तथा ह्यस्य 'ब्रह्मविदाप्नोति पर'मिति प्रस्तुतस्य ब्रह्मणः स्वरूपविवरणप्रवृत्तेन सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रेण सत्यज्ञानानन्तपदत्रयसामानाधिकरण्येन, विशिष्य च देशकालवस्तुपरिच्छेदापनोदकानन्तपदेन च निर्विशेषतया प्रतिपादितस्य यतो वाचो निवर्तन्त इत्युपसंहारेऽपि तथैव निर्धारणात् उपक्रमोपसंहारैकरूप्यात्मकतात्पर्यलिङ्गेन पर्यवसितं निर्विशेषे तत एवाद्वितीये प्रत्यग्ब्रह्मणि ब्रह्मवल्यास्तात्पर्यम् । तथैवैतदसन्दिग्धं भाष्यनिबन्धनेन व्याख्यातं चेति विशदं च विपश्चिताम् । तथाप्यत्र कतिचन विवदन्ते वावदूकाः । तद्यथा —

'ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मवित् ब्रह्मैव भवती'ति चान्यत्र तत्र तत्र श्रुतौ सिद्धवत्फलनिर्देशेऽपि प्रकृते 'ब्रह्मविदाप्नोति पर'मिति फलवचने प्राप्तव्यं किल फलमावेदितं, ततश्च तत्साधनतयोपदिष्टं वेदनमपि स्यादुपासनं, विद्युपास्त्योश्च सहप्रयोगोऽपि श्रुतिषु बहुत्र भाष्योदाहृतः, ततश्च ब्रह्मण उपासनेन तद्भावाख्यो मोक्षः प्राप्तव्यः, एवं च नियोगपरेयं वल्लीति । अयमेतेषामाशयः सूत्रभाष्ये समन्वयाधिकरणद्वितीयवर्णके वृत्तिकारपूर्वपक्षविवरणावसरे 'तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यती'ति भाष्येण विवृतः । अनेनैवाशयेनानन्दमयब्रह्मत्ववादोऽप्यत्र प्रसक्तः । तथाहि सूत्रभाष्ये आनन्दमयाधिकरणं वृत्तिकारमतानुरोधेन आनन्दमयब्रह्मत्वप्रसाधनपरं प्रथमं व्याख्यातं भाष्यकारैः । तत्रवार्थे यथोपक्रममुपसंहारगतमिव 'आनन्दमय-

मात्मानमुपसंक्रामती 'ति वाक्यमवलम्ब्य तत्रोपसंक्रमणमपि प्राप्तिमभिप्रेत्य प्राप्तिलक्षणस्य फलस्याप्युपक्रमोपसंहारस्पर्शित्वलक्षणामुपपत्तिमपि ते समाचक्षते ॥

स एष तेषां सोपपत्तिक इव संलक्षितः पूर्वपक्षोऽत्र महत्या विवक्षया प्रतिक्षेप्तव्यः । प्रतिक्षिप्तश्च भाष्ये । तद्यथा—ब्रह्मविदित्युपक्रान्तस्य ब्रह्मणः स्वरूपनिर्धारणार्थप्रवृत्तां सत्यं ज्ञानमित्यृचमुदाहृत्य ब्रह्मणो लक्षणार्थं वाक्यमिति तदर्थं विवृण्वता भाष्यकारेण सजातीयविजातीयव्यावृत्तं सत्यज्ञानानन्तरूपं पूर्वोक्तविधया निर्विशेषं ब्रह्मेति स्थापितम् । तथैवैतद्व्याख्यातं वार्तिककारेण च । अत एव प्रियमोदादिविशिष्टतया सविशेषतया प्रकाशितस्य नात्र प्राधान्येन प्रतिपादनमिति सूचनेन तस्य ब्रह्मत्ववादोऽप्यपोदितो वेदितव्यः । विशिष्य चानन्दमयवाक्यव्याख्यावसरे तस्य ब्रह्मत्वं भाष्यवार्तिककाराभ्यामत्यादरेण बहुयुक्त्या निराकृतं च । तथा तद्वेदनं 'यो वेद निहितं गुहायां परमे व्योमन्' इति श्रुतिकृतविवरणानुसारेण ब्रह्मणः प्रत्यक्त्वेन साक्षात्काररूपमित्यप्युभाभ्यां सिद्धान्तितम् । अतश्च न तदुपासनं, न च विधेयमिति च बोधनेन वृत्तिकारव्याख्या प्रत्याख्याता । एतदर्थसमर्थनायैव ज्ञानविधिविधूननपरः तावानपि भूयान् यत्नः समाश्रितो वार्तिककारेण । अनेनैव व्याजेन चिरकालकर्मश्रद्धावरुद्धोऽयमद्वैताध्वानं विध्वंसयेदपीति स्वस्मिन् परिगृहीतस्य सब्रह्मचारिणां मात्सर्यस्य उत्सारणमपि प्रयोजनमभिसंहितं स्यादिति वार्तिककाराणामाशयविशेषं सूक्ष्मचक्षुषा वयमुत्प्रेक्षामहे ॥

यद्यपि — 'शिरआदिप्रक्लृप्तिस्तु स्यादुपासनकर्मणे । तस्मादेवं चितीरेता मानसीर्व्याचचक्षिरे ॥' इति अन्नमयादिकोशनिरूपणसन्दर्भसंग्रथितश्लोकेनानन्दमयान्तेषु पञ्चस्वपि कोशेषु वार्तिककारस्याप्यभिमतमुपासनमिति प्रतीयते; तथापि— 'उपासीनश्चितीरेवं विद्वानेता यथाक्रमम् । पूर्वपूर्वप्रहाणेन ह्यन्तरन्तः प्रपद्यते ॥' इति तदनन्तरवचनेनोक्तोपासनस्य बुद्धिशुद्धिद्वारा कोशपञ्चकप्रविलापनप्रयोजकतया पञ्चकोशातीतप्रत्यग्भूतपुच्छब्रह्मप्रतिपत्त्युपाय-

नैवावेदितेति उपाये नियोगस्वीकारेऽपि उपेये विज्ञाने नियोगनिराकरणं न प्रकृतविरोधि। अपि च—

'स्वभावतो वा संप्राप्तमनूद्योपासनं श्रुतिः।
नामादाविव भूमानं विधत्ते ज्ञानमात्मनि॥

श्रुत्यन्तराद्वा संप्राप्तं मोक्षादर्वाक् फलाय तु।
तदनूद्य परं श्रेयःप्राप्तये ज्ञानमुच्यते'॥

इति श्लोकाभ्यां तत्राप्यविवक्षां व्याचचक्ष एव॥

एवं प्राप्तिरप्यत्र भाष्योक्तदशमप्राप्तिन्यायेन वार्तिकोदाहृतकण्ठचामीकर-न्यायेनापि अप्राप्तत्वभ्रमनिवृत्तिरेव, न ग्रामप्राप्तिवद्व्यापाराधीनेति भाष्य-वार्तिकाभ्यामपि व्याख्यातम्। अतश्चानन्दमयस्य ब्रह्मत्वेऽपि तदात्मना-ऽवस्थितस्य जीवात्मनस्तत्प्राप्तेरसंभवात् 'आनन्दमयमात्मानमुपसंक्रामति' इत्यत्रोपसंक्रमणं न प्राप्तिरपि तु तस्यापि बाधनमेव तदतोऽपि नानन्दमयो ब्रह्म, न च तत्प्राप्तिर्ब्रह्मविद्याफलमित्यपि व्याख्यातत्वेन वृत्तिकारीयतथा-भूतव्याख्या प्रत्याख्यातैव। ततश्च न तदुदितन्यायेन ब्रह्मप्राप्तिफलस्योप-संहारस्पर्शित्वमपि इति तन्मतमपनुद्य आनन्दमयस्यापि बाधनाधीनपुच्छब्रह्मप्राप्तेः 'यतो वाचो निवर्तन्ते' इति समनन्तरमन्त्रवर्णितायाः नित्यसिद्धाया अप्यनाद्यज्ञानतिरोहितायाः पूर्वोदितकण्ठचामीकरादिन्यायेन विद्यया अभिव्यक्ति-रेवेति च सुष्ठु प्रतिष्ठापनेन सर्वथापि नियोगाविषयनिर्विशेषात्मप्रतिपत्तिपरेयं वल्ली समुल्लसिता भाष्येण च वार्तिकेन च॥

तथा अद्वैतसिद्धान्तसमर्थनेऽपि बद्धपरिकरोऽयमित्यपि तन्निबन्धन-परिसन्धानवतामनुसन्धातुं शक्यम्। तथाहि— ब्रह्मविदाप्नोति परमिति वाक्यव्याख्याने— 'ब्रह्मैवात्र परं प्राप्यं तज्ज्ञानं नान्यसिद्धये। अन्यज्ञानं हि नान्यस्य कचिदृप्याप्तये यतः॥' इत्यत्रान्यज्ञानादन्यप्राप्त्यसंभवयुक्त्या पर-शब्दार्थो ब्रह्मेति विवृण्वतोक्तयुक्त्या जीवो ब्रह्मेत्यपि व्याख्यातम्। एवं

'ज्ञातुर्हार्दगुहान्तःस्थं प्रतीचोऽन्यन्न लभ्यते। सत्यादिमदतो ब्रह्म प्रत्यगात्मैव तद्विदः ॥' इति गुहानिहितवाक्यार्थवर्णनेनापि जीवपरैक्यं समर्थितम्। तथा 'सोऽश्नुते निखिलान् कामान्' इत्याद्यैः श्लोकैः सहशब्दस्य यौगपद्यार्थसमर्थनेनापि प्रत्यग्ब्रह्माभेदः प्रसाधितः। एवमेव — 'तरुशाखाग्रदृष्ट्यैव सोमं यद्वत्प्रदर्शयेत्। निष्कोशं कोशदृष्ट्यैव प्रतीचि ब्रह्म दर्श्यते ॥' इत्यत्र कोशपञ्चकनिरूपणस्यैक्यबोधफलं प्रदर्शितम्। अथ च 'तस्यैष एव शारीर आत्मेत्येवं ब्रुवाणया। ऐकात्म्यमुच्यते श्रुत्या ह्यप्रविष्टाप्रविष्टयोः ॥' इत्यत्रापि तथा तयोरैक्यं समर्थितम्। ततश्च 'यदा ह्येवैष एतस्मिन्नदृश्ये' इति श्रुतिगतादृश्यादिशब्दार्थनिरूपणे — भावाभावात्मिका बुद्धिर्यत आत्मापहारिणी। भावाभावनिषेधेन प्रतीचि स्थाप्यते ततः ॥ दृश्यादिप्रतिषेधोक्त्या प्रतीचि ब्रह्म बोध्यते। न तदन्यत्तदन्यस्य परमार्थात्मता कुतः ॥' इत्यादिवाक्येनापि तदैक्यं व्याख्यातम्। प्रदर्शनार्थमेतावदुदाहृतम्, यथावसरमन्यत्रापि बहुत्र तदैक्योपपादनसमादरो वार्तिककारस्य स्फुटदर्शनः। ब्रह्मविदिति ब्रह्मोपक्रम्य ततो जगत्सृष्टिवचने 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यत्रात्मशब्दात्, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति प्रवेशवर्णने प्रवेशशब्दार्थः सृष्टे शरीरे तादात्म्याभिमानेन जीवभाव एव नान्यः प्रतिबिम्बभावादिरित्यर्थसमर्थनात्, 'स यश्चायं पुरुषे यश्चासावादित्ये' इति अत्रोपाधिद्वयपरामर्शस्य उत्कर्षनिकर्षापोहार्थत्वसमर्थनाच्च वल्ल्या अस्या ऐक्यपरत्वप्रसाधनं भाष्ये स्फुटम्। तत्तथैव वार्तिककारेणापि व्याख्यातम्। इतः परत्रापि बहुत्र तत्प्रसाधनसमादरो वार्तिककारस्य पूर्वमस्माभिरुदाहृतः। तदप्युदाहरणमनुक्तचिन्तनस्य।

अथ कथमस्य दुरुक्तचिन्तनात्मकत्वं पूर्वोक्तविधया गौणमपि घटत इत्येतदपि किंचित्संचिन्त्यते। तथाहि — अस्त्यत्र श्रुतौ 'अथातोऽनुप्रश्नाः' इति कतिचित्प्रश्नानामनुकीर्तनम्। तत्र च उताविद्वानित्यादिश्रुतिविवृतः अविदुषो ब्रह्मप्राप्त्यप्राप्तिविषय एकः, विदुषस्तद्विषयश्चापरः, प्रश्ना

इति बहुवचनसूचितः ब्रह्मणोऽस्तित्वनास्तित्वविषयकश्चान्य इति भाष्यव्याख्याताः त्रयः प्रश्नाः। एतेषामपाकरणप्रकारपरिबोधनात्मकं स य एवंविदिति वाक्यावतरणभाष्यमेवं प्रवृत्तं — 'अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः (प्रत्याख्यात इत्यर्थः) कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्यः अस्त्येव तदाकाशादिकारणं ब्रह्मेत्यपाकृतः प्रश्न एकः। द्वावन्यावनुप्रश्नौ विद्वदविदुषोः ब्रह्मप्राप्त्यप्राप्तिविषयौ। तत्र विद्वान् समश्नुते न समश्नुत इत्यनुप्रश्नोऽन्त्यः। तदपाकरणायोच्यते स य एवंविदिति। मध्यमोऽनुप्रश्नः (अविदुषो ब्रह्मप्राप्तिविषयः) अन्त्यापाकरणादेवापाकृत इति तदपाकरणाय न यत्यते' इति।

अत्र किल वार्तिककारः 'कार्येण रसलाभेन प्राणनाद्युपपत्तिभिः। अस्तीत्यपाक्रियैतस्य प्राहुर्भाष्यकृतः स्वयम्। प्रश्नयोरस्तिनास्तीति व्याख्यातत्वादथाधुना। आहो विद्वानमुं लोकमित्यस्यापाक्रियोच्यते॥' इति श्लोकाभ्यां भाष्याभिप्रायं व्याख्याय तत्र भाष्ये मध्यमानुप्रश्नस्यापाकरणमर्थसिद्धमित्युक्तेऽर्थे अस्वरसं मनसि निधाय शब्देनैव तदपाकरणसिद्धिरिति स्वाभिप्रायमाह समनन्तरश्लोकेन — 'तद्वाणीभानुसंप्लुष्टबहुलाज्ञानधीरहम्। यदाहीत्यादिना मन्ये उतेत्यादेर्विनिर्णयम्॥' इति। एवं व्याख्याने यदाहीत्यादिना विद्वदविदुषोः ब्रह्मप्राप्त्यप्राप्तिप्रश्नद्वयसमाधाने, असतोऽर्थस्य ज्ञानाज्ञानाभ्यां मुक्तिबन्धनायोग्यत्वात् तेनैव तदस्तित्वनिर्णयोऽपि संभाव्यत इति तत एव त्रयाणामपि परिहारः प्रश्नानामिति लाभान्तरमप्याह समनन्तरश्लोकेन— 'उताविद्वानमुं लोकमिति प्रश्नविनिर्णयात्। अस्ति नास्तीति सिद्धः स्यात्प्रश्नयोरपि निर्णयः॥' इति।

तदनेव वचनेन भाष्योक्तं दुरुक्तमिव व्यञ्जयति, न तु दुरुक्तमेव स्थापयति, यतः तत्रैव स्वाभिप्रायकथनात्प्रागेव 'तद्वाणीभानुसंप्लुष्टबहुलाज्ञानधीरह'मिति विनयो हि महान् भाष्यकारे प्रदर्शितः। तथोपक्रम एव

च — ' तैत्तिरीयकसारस्य मयाचार्यप्रसादतः । विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ' ॥ इति भगवति भगवत्पादे भूयसी हि दर्शिता भक्तिः ।

तदेवमितरयोरुक्तानुक्तचिन्तनयोः सुलभत्वेऽपि दुरुक्तचिन्तनस्यास्य दुर्लभत्वान्नातिपरीक्षणेनैकेनैवोदाहरणेन विरम्यते । सर्वथापि परिशोध्यमाने शाङ्करेणैवाध्वना अद्वैतसिद्धान्तसमर्थनधुरन्धरोऽयमाचार्य इति प्रतिसंधानात्तदनुसन्धानेनैव निबन्धमधुना प्रकृतमुपसंहरामः ॥

इति शिवमस्तु ॥

—×—

# लोकोत्तरं चरितम् ॥

— श्रीराजनारायणशास्त्री

येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु ।
तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम् ॥

'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति श्रुतेः सकलानर्थबीजभूतानाद्यनिर्वचनीयाविद्यानिबर्हणपुरस्सरं निरतिशयानन्दरूपब्रह्मस्वरूपावस्थितिरूपस्य धर्मार्थकाममोक्षाख्यपुरुषार्थेषु परमपुरुषार्थरूपस्य मोक्षस्य कारणं निष्कामकर्मोपासनानुष्ठानद्वारकचित्तशुद्धि चित्तैकाग्र्योपयुक्तश्रवणमनननिदिध्यासनाद्यखिलोपायेश्वरप्रसादप्राप्तं ज्ञानमेव कारणम् । तस्य च ज्ञानस्य कारणनिर्णयप्रसङ्गे 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेरुपनिषद एवेति निश्चीयते । अत एव,

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येयः इति दर्शनहेतवः ॥

इति । तत्रेदमनुसन्धेयम् । श्रुतिद्वारा श्रवणे सत्यपि विनाऽन्तःकरणशुद्धिं न कश्चिदाप्तुं प्रभुर्ब्रह्मबुद्धिम् । अत एव 'तपसा कल्मषं हन्ति' 'विद्ययाऽमृतमश्नुते' 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादि । अन्तःकरणनैर्मल्याभावे श्रुतमपि श्रुतिवाक्यं न जनयत्येव तत्त्वज्ञानम् । अत एव,

मूढः श्रुत्वापि तद्वस्तु न जहाति विमूढताम् ।
निर्विकल्पो बहिर्यत्नादन्तर्विषयलाभतः ॥

इति । निष्कर्षस्तु मोक्षकारणीभूततत्त्वज्ञानस्य तत्कारणीभूतान्तश्शुद्धेश्च

कारणं वेदज्ञानमेव । वेदज्ञानद्वारा ज्ञातस्वस्ववर्णाश्रमादिनिष्कामकर्मानुष्ठानैः शुद्धान्तःकरणस्य पुरुषस्य तत्त्वमस्यादिमहावाक्यैरुत्पद्यतेऽखण्डाकारं ब्रह्मज्ञानम् । धर्मज्ञानब्रह्मज्ञानयोः परमं प्रमाणं श्रुतिरेवेति । अत एव,

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

इति । ब्रह्मज्ञाने वेदान्तवाक्यविचारस्य कारणत्वमपि प्रतिपादितम् । तथाहि— 'कुर्वाणस्यात्ममीमांसां वेदान्तोक्तेन कर्मणा । मुक्तिः संपद्यते सद्यो नित्यानन्दप्रकाशिनी ' इति । एवं च धर्मब्रह्मणोः परमप्रमाणभूतस्य अनधिगताबाधितप्रयोजनवदर्थावबोधजनकस्य वेदस्य केचन भागाः कर्मपराः परे च ब्रह्मपरा इति विवेकः । तत्र के भागविशेषा अशेषान् कर्मप्रभेदान् प्रतिपादयन्ति, के च निर्विशेषं ब्रह्मेति ज्ञानाय पूर्वोत्तरमीमांसयोः परम उपयोगः ॥

अतीव गभीरयोस्तयोस्तत्त्वाधिगमाय आचार्यचक्रचूडामणेर्भगवतः श्रीसुरेश्वराचार्यस्यावतारः । तदीयासु नैकासु कृतिषु विधिविवेक-भावनाविवेकनामकौ द्वावपि ग्रन्थौ विशेषतो महत्त्वमुपस्थापयतः । यदीयव्याख्यारूपा दार्शनिकवाचस्पतेर्वाचस्पतिमिश्रमहोदयस्य वाणी विद्वद्व्रजस्य चेतश्चमत्कुरुते । मीमांसानुक्रमणिकापि मीमांसापथमवतारयति बलादिव चिन्तकान् । तत्त्वप्रदीपिकाग्रन्थस्य नयनप्रसादिन्यां टीकायां बहुलमुद्धरणमेषामाचार्याणां वचसामभिप्रकाशयति मीमांसापारदर्शिताम् ॥

उत्तरमीमांसायां प्रमुखं स्थानमलंकुर्वाणमौपनिषदं सिद्धान्तमेकत्वं प्रतिपादयत् ब्रह्मसिद्धिनामकं ग्रन्थरत्नमाचार्यचरणैर्निबद्धं ; यदुपजीव्यता च श्रीमधुसूदनसरस्वतीस्वामिपादैः स्वीये अद्वैतसिद्धिनामके बहुशः समुदघोषि । तथाहि—

सिद्धीनामिष्टनैष्कर्म्यब्रह्मगानामियं चिरात् ।
अद्वैतसिद्धिरधुना चतुर्थी समजायत ॥ इति ।

नैष्कर्म्यसिद्धिरपि पूज्यैः श्रीसुरेश्वराचार्यपादैरेव निबद्धेति परम्परया श्रूयते। एते च सनातनवैदिकधर्मोद्धारकाणां भगवदाद्यशङ्कराचार्यचरणानां प्रियाद्विशिष्या इति तन्मतसंरक्षणे प्रतिष्ठापने तत्प्रचारणे च तथा कृतश्रमा यथा नान्य आचार्याः। एवंविधानामाचार्यपादानां विषये वचोविन्यासैर्न सन्तोषोऽपितु,

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम्।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति॥

केचन कथयन्ति — यदमी ग्रन्थाः श्रीमण्डनमिश्ररचिताः न श्रीसुरेश्वरकृता इति। तत्र भेदाभेदविवादे विचारं विहाय बृहदारण्यकभाष्यवार्तिकग्रन्थमुपस्थापयामि; यत्र आचार्यचरणैर्गभीरा औपनिषदाः पदार्था विवेचिताः। अनन्तरलेखकैः तेषां सरणिरेव प्रमाणतया समुद्धृता॥

एवं पूज्यपादानां श्रीमदाचार्याणां स्मारकं किमपि तत्रभवद्भिराकलनीयमभिश्रुतिगतं मोमुदीति सर्वथा मदान्तरमिति किं विशेषतः?

—:*:—

# श्रीसुरेश्वराचार्यविवृतः मैत्रेय्यै याज्ञवल्क्योपदेशः ॥

—विचारकः

कस्मिंश्चिद्देशे काले च याज्ञवल्क्यो नाम ब्रह्मविद्वरिष्ठः इमं भारतभुवमलंचकार । स चाधिगतब्रह्मात्मतत्त्वोऽपि जीवन्मुक्तिपदं लब्धुं, कर्माणि विधिवत्संन्यस्य यथाशास्त्रं 'अनिकेतः स्थिरमतिः' इत्यादिरीत्या सञ्चरितुमियेष । 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः'

'प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥

इत्यादिश्रुतिस्मृतयो हि ज्ञानसंन्यासयोः समुच्चयमाहुः ॥

एवं कृतसंकल्पो भगवान् याज्ञवल्क्यः, गृहस्थस्य उत्तमाश्रमं जिगमिषोः भार्याद्यभ्यनुज्ञायाः श्रुतौ विहितत्वात् स्त्रीयां ज्येष्ठां ब्रह्मवादिनीं मैत्रेयीमाहूय जगाद— 'अरे मैत्रेयि, अहमस्मात् गार्हस्थ्यलक्षणात् स्थानात् उपरि गन्तुं कृतसंकल्पोऽस्मि, अनुजानीहि मां' इति ॥

सा चाह— 'भवान् वयसो ज्ञानस्य देशकालयोश्चानुरूपं चिकीर्षति । एवं सति आवाभ्यां यत्कर्तव्यं तदनुशास्तु' इति ॥

याज्ञवल्क्य आह— 'स्त्रीणां धनादिषु स्वत्वाभावात् मयि प्रव्रजिते युवयोः नार्थसंबन्धः स्यादित्यतः युवाभ्यां मदीयं धनं विभज्य प्रदास्यामि ; इत्थं 'तान् अनुरूपाभिर्वृत्तिभिः संयोज्य संन्यसेत्' इति श्रुतिरनुसृता भवेत्' इति ॥

सा आह – 'नूनमस्मद्धितकरमेव धनं, भवतां संन्यासवत्। महानुभावानां भवतां संपर्कः ममोन्नतिकारणमेव। दृश्यते हि रथ्योदकमपि गङ्गां प्राप्य पवित्रभावं प्राप्नुवत्। भवत्संपर्कादेव मे भाति मोक्षादन्यः न परमः पुरुषार्थ इति। अतः पृच्छामि कथमिदं धनं मम मोक्षं साधयिष्यति इति। तिष्ठतु तावदिदं धनं, धनपूर्णा पृथिवी समग्राऽस्ति चेत् स्वाधीना तदापि मोक्षो भविष्यति न वा? धनं हि न सत्तामात्रेण मोक्षोपयोगि अक्रियात्वात्। अतः पृच्छामि धनसाध्यकर्मणा मोक्षो भवेद्वेति' ॥

आह याज्ञवल्क्यः – 'न धनेन तत्साध्यकर्मणा वा मोक्ष' इति ॥

मैत्रेयी प्रत्याह– 'कस्मात्तर्हि मह्यं धनं दित्ससी'ति ॥

आहेतरः– 'यथा लोके वित्तात् समीचीनं जीवनं तथैव तवापि गृहपश्वादिबहुपरिकरयुक्तं जीवनं भवेत्। अविद्यानिवर्तकज्ञानादेव हि अमृतत्वं। कर्मणा मोक्षप्राप्तौ आशा न कार्या। न हि तापः अग्निसेवनान्निवर्तते' इति ॥

मैत्रेय्याह– 'साधूनां स्वभावादेवोपकारिणी प्रवृत्तिः अपकारिण्यपि दृश्यते। भवन्तस्तु मां प्रति प्रतिकूलं चिकीर्षन्ति। नूनं ममैवापराधोऽयम्। भवदन्यः को वा मम हितकृत्स्यात्? अनुरक्तां प्रियां साध्वीं वित्तेन बद्ध्वा कामोच्छित्तिमकृत्वा न हि संन्यसितुं युक्तं भवादृशानाम्। यदि वित्तादमृतत्वं भवेत् तर्हि किमिति तत् त्यज्यते? यदि नामृतत्वं भवेत्तर्हि ममापि किं तेन। यदि मय्यनुजिघृक्षा करुणा वा स्यात् भवतः तर्हि यदेव भगवान् मोक्षसाधनं वेद तेन मां संविभजस्व। यद्विज्ञानाद्भवान् स्वाराज्यमिच्छति तदेव धनं मे देहि। यद्धि वित्तं आद्यन्तरहितं भोगेन च क्षयं न याति तद्धनं भवत्सु विद्यते। तत्परित्यज्य किमिति अन्तवद्धनं दीयते, अनन्तमेव धनं दीयताम्' इति ॥

स आह—'यतो हि सांसारिकपुरुषार्थेभ्योऽभ्युत्थितस्य मुक्तिसाधनं ज्ञानं दातुं न शक्यते, अतः तवामुमुक्षुत्वमाशङ्क्य मया लौकिकं धनं भवत्यै दित्सितम्। यदि त्वं संसाराद्विरक्तासि तर्हि गृहाणेदममृतम्। मोक्षं यान्तं सहजा अपि मुञ्चन्तीति प्रसिद्धं, त्वं तु अत्यन्तभक्त्या मोक्षेऽप्यनुगन्तु-मिच्छसि। अतिस्नेहाकृष्टा देवी उमा परमेश्वरस्य अर्धं जग्राह। त्वं तु कृत्स्नमेव मामाप्तुमिच्छसि सर्वात्मभावप्राप्त्या। अहो बुद्धिमत्ता तव!। अमृतत्वसाधनं ज्ञानं तव वक्ष्यामि तच्छ्रुत्वा निदिध्यासस्व' इति। एवमुक्त्वा भगवान् याज्ञवल्क्यः इत्थमुपादिशत्—

आद्यन्तवत्वात् सर्वमेवानात्मवस्तु स्वतः दुःखहेतुरेव। तथापि पुरुषस्य रागद्वेषादिपूर्वकं शोभनाशोभनाध्यासाभ्यां कदाचित्सुखमपि जनयति; यथा ग्रीष्मे शैत्यं, शिशिरे तापः; यथा वा शब्दः रक्तः प्रियः, द्विष्टः अप्रियः। आत्मा तु सर्वदैव प्रियः। आत्मप्रीत्यर्थतया तु जायादिकं सर्वं कदाचित् प्रीतिगोचरः। अतः अनात्मवस्तु सर्वमेव दुःखभावनया परित्यज्य आत्मानमेव संश्रयेत्। 'न तदस्ति सुखं लोके यन्न दुःखकरं भवेत्। तदसंप्राप्तिविच्छेद-क्षयेष्वसुखकृद्यतः॥' इति च महतां वचनम्। ततश्चानात्मवस्तुज्ञानतः सर्वाह्लादप्राप्तिः, सर्वानर्थनिवृत्तिश्च नैव भवेताम्। अतश्च अनात्मनि यः आसङ्ग आसीत् तमात्मनि निवेशयेत्। ब्रह्मलोकान्ते नरकादिव यस्य निर्वेदो नागतः तस्य न ज्ञानेऽधिकारोऽस्ति॥

आत्मा द्रष्टव्यः। आत्मदर्शनं च अनात्मनि आत्मदर्शननिवृत्तिरेव, आत्मनः स्वप्रकाशत्वात्। अत्र विधिश्चाज्ञातज्ञापनमेव, न तु अप्रवृत्तप्रवर्तनम् अक्रियात्वात् ज्ञानस्य। श्रवणं मननं च आत्मविषयं प्रयत्नसाध्यत्वाद्विधीयते। श्रवणं च वेदान्तानामेव सन्निहितत्वात्तेषाम्॥

शक्तितात्पर्यनिश्चायकैर्न्यायैः श्रुत्यादिभिश्च ब्रह्मात्मनि वेदान्ततात्पर्या-वधारणं श्रवणम्। श्रुत्यादिना ज्ञातस्य तत्त्वस्य असंभावनानिरासेन द्वैतमिथ्यात्व-

साधकतर्कानुसन्धानं मननम् । कृतश्रवणमननस्यानायासेन तत्त्वज्ञानं निदिध्यासनमुच्यते । यदि कश्चिदसम्यग्दर्शितया ब्राह्मणादिजातिं आत्मनः पृथक्त्वेन मन्यते तं मूढं सैव जातिः पुरुषार्थात् भ्रंशयेत् आत्मनः सर्वात्मतयाऽवेदनात् ॥

इत्थं श्रवणमुपपादितम् । इदानीं मननं विस्तरेणोपपाद्यते । जगदिदं नामरूपादिभेदभिन्नं, तत्कथं आत्मैव सर्वमिति द्रष्टुं शक्यते इति चेत्, अव्यावृत्ताविसंवादिधीव्याप्तत्वात् चिन्मयमेव जगत् । यथा दुन्दुभि शङ्खवीणादिशब्दगता विशेषाः न सामान्यशब्दातिरेकेण ग्रहीतुं शक्यन्ते, तथा चिन्मात्रव्यतिरेकेण जगन्न ग्रहीतुं शक्यते । यथा वा महासामान्यव्यतिरेकेण सामान्यभेदरूपाणां विशेषाणामभाव तद्वत् । सद्विशेषाणां सर्ववस्तूनां सद्व्यतिरेकेणाभावः ॥

इदं स्थितिकाले उक्तम् । एवमुत्पत्तिकालेऽपि : यथाहि एकवह्न्युत्पन्नानां धूमज्वालादीनामुत्पत्तेः पूर्वं वह्निरूपेणैकत्वं तद्वत् नामरूपादिभेदभिन्नानामनात्मनामुत्पत्तेः पूर्वमैकात्म्यमिति । न च वेदस्य शब्दराशित्वेन बुद्धादिवाक्यवदप्रामाण्यम् ; ईश्वरश्वासतुल्यस्य वेदस्य आकाशादिवदीश्वरेणाप्रयत्नोत्पादितत्वात् स्वतश्च प्रमाणत्वात् । न चैकात्म्ये वेदानामपि मिथ्यात्वात् अप्रामाण्यं शङ्कनीयम् ; इदं सर्वं यदयमात्मेत्युक्त्यैव पुरुषार्थस्य समाप्तत्वात् ततः परं तदप्रामाण्यस्य सम्मतत्वात् । 'सर्वोपायोऽनुपायः स्यादुपेयावसितौ यतः' ॥

यथैव स्थितिकाले उत्पत्तिकाले च प्रज्ञानव्यतिरेकेण प्रपञ्चाभावः तथा प्रलयेऽपि । यथा सर्वासामपां समुद्रे लीयमानानां तद्व्यतिरेकेणाभावः एवं मृदुकर्कशकठिनादिस्पर्शानां स्पर्शसामान्यव्यतिरेकेणाभावः स च तथा दृष्टः तत्र लीयते तच्च मनःसंकल्पे, मनोविषयश्च बुद्धिविषये, स च विज्ञानघने लीनः तद्व्यतिरेकेण नास्ति । करणमपि विषयसाजात्यात् विषयैः सार्कं

लीयत एव । तस्मादुत्पत्तिस्थितिलयकालेषु प्रज्ञानव्यतिरेकेणाभावात् प्रज्ञानं ब्रह्म ॥

सोऽयं बुद्धिपूर्वकः प्रपञ्चलयः ब्रह्मविदां विद्यानिमित्तः आत्यन्तिकप्रलय इति भण्यते शास्त्रेषु । जीवः एतेभ्यः भूतेभ्यः सैन्धवखिल्यवत् अद्भ्यः सूर्यादिप्रतिबिम्बवद्वा समुत्थाय शास्त्राचार्योपदेशेन ब्रह्मविद्यया उदकनाशे प्रतिबिंबवत् विनश्यति । यथा प्रतिबिंबः उपाधिनाशे बिंबमेव प्राप्नोति तथा जीवः शुद्धं ब्रह्मैव भवति ॥

एवं याज्ञवल्क्येन प्रोक्ते मैत्रेय्याः संशयो बभूव । आह च 'भगवन् विज्ञानघन एव इत्युक्त्वा पुनः 'न प्रेत्य संज्ञास्ति' इति वचनान्मम मोहो जातः जीवोऽपि नश्येदिति' ॥

याज्ञवल्क्य आह—नाहं मोहापनयाय प्रवृत्त. मोहं ब्रूयाम् । तवैवापराधादयं मोह उत्पन्नः । विज्ञानघन इति मया कृत्स्नैकात्म्यमुक्तम् । अविद्योत्थविशेषविज्ञाननाश एव न प्रेत्य संज्ञाऽस्तीत्यनेनावोचम् । यतः यदा मिथ्या द्वैतं अज्ञानवशाद्भवति तदा इतर इतरं पश्यति इव विशेषविज्ञानवानिव भवति जीवः । यदा तु ब्रह्मसाक्षात्कारवशात् सर्वमात्मेति ज्ञानं तदा द्वैताभावात् विशेषज्ञाने हेतुर्नास्ति स ब्रह्मैव भवति । एवमुपदिश्य कर्मणा ज्ञानस्य सहभावायोगात् याज्ञवल्क्यः ससाधनं कर्म परित्यज्य उत्तममाश्रमं स्वीकृत्य विजहार ॥

---

# श्रीसुरेश्वराचार्याः आभासवादश्च ॥

डा० गौरीनाथशास्त्री (वाराणसी)

वेदान्तेषु तत्र तत्र जीवस्वरूपनिरूपणप्रस्तावे जीवोऽन्तःकरणावच्छिन्नं चैतन्यमिति, ब्रह्मणः प्रतिबिम्बो जीव इति, ब्रह्मण आभासो जीव इति च त्रयो वादाः शास्त्रकारैरुल्लिख्यन्ते। तत्र सर्वेऽपीमे वादाः श्रुतिस्मृतिमूलकाः भाष्यमूलकाश्च। तत्र तावदवच्छेदवादसमर्थकं प्रमाणम्— 'यथाऽग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृह॰ २–१) इति श्रुतिः। अपि च 'यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥' (मु. २–१) अयमर्थः— विस्फुलिङ्गो यथा अल्पकाष्ठावच्छिन्नोऽग्निः तथा जीवोऽल्पान्तःकरणावच्छिन्न इति। स्मृतिरपि—

'ममैवांशो जीवलोके जीवभूतः सनातनः' (भगवद्गीता १५-७)

अथ प्रतिबिम्बवादसमर्थनपरा श्रुतिः—

यथा ह्ययं ज्योतिरात्मा विवस्वान्
अपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा॥

अपि च,

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ (ब्र. बि. १२) इति।

स्मृतिश्च–

'यद्यज्जनो भगवते विदधीत मानं

तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः'। (भागवते)

अत्र दृष्टान्तमुखेन प्रतिबिम्बवादः प्रतीयते। यद्यपि आभासवादः प्रायः प्रतिबिम्ब एव आभासपदप्रयोगात् प्रतिबिम्बवाद एव नातिरिक्त इति वक्तुं शक्यते। बिम्ब एव हि प्रतिबिम्बः नातिरिक्तः। दर्पणप्रतिहतै र्नयनरश्मिभिः परावृत्य बिम्बस्यैव ग्रहणात् कथं बिम्बे चक्षुःसंयोग इति शङ्कानवकाशः। तथापि आभासवादे प्रतिबिम्बो बिम्बाद्भिन्नः प्रातीतिकः शुक्तौ रजतमिव दर्पणे अध्यस्तः। तस्य च अधिष्ठानज्ञाने सत्यपि यावद्दर्पणसान्निध्यं सत्त्वं, दर्पणापनयने नाश इत्यभ्युपगमः। अयं च सिद्धान्तलेशसंग्रहे द्वितीयपरिच्छेदे 'अद्वैतविद्याकृतस्तु' इत्यादिना सयुक्तिकं विस्तरेणोपपादितः। वेदे 'जीवेशौ आभासेन करोति माया चाविद्या च स्वयमेव भवति' इत्यादिषु आभासपदप्रयोगः प्रतिबिम्बमिथ्यात्वतात्पर्यक इत्येतेषां मतम्॥

आचार्यभगवत्पादैस्तु 'पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते' (सू. भा. १–२–६) इत्यादौ अवच्छेदवादः, 'आभास एव च एष जीवः परस्यात्मनः जलसूर्यकादिवत् प्रतिपत्तव्यः (सू. भा. २-३-५०) इत्यादौ प्रतिबिम्बवादः, तत्रैव आभासपदप्रयोगात् आभासवादश्च व्यवह्रियते। परं तु उपदेशसाहस्र्यां (तत्वमसि प्रकरणे) आचार्यैः आभासवादः स्पष्टतयैव व्यवहृतः, 'आभासासत्वमेव च' (२-१८-४३) 'आभासस्याप्यवस्तुतः' (२-१८-४४) इत्यादौ। अयमाभासवादः श्रीविद्यारण्यश्रीचरणैः कूटस्थदीपे 'कूटस्थो ब्रह्म जीवेशौ इत्येवं चिच्चतुर्विधा' इत्यारभ्य सम्यगुपपादितः। तत्रैव च आभासस्यावस्तुत्वे तत्वमसि इत्यादिवाक्यात् जीवेश्वरयोरैक्यप्रतिपत्तिः कथं युज्यत इत्याशंक्य नेदमभेदे सामानाधिकरण्यमपितु बाधायां, यत् त्वमित्यभिमतं तत् तथा न, अपि तु ब्रह्मैव 'यः स्थाणुः स पुमान्' इतिवत् इत्यर्थ इति समाहितम्।

S. S. 9.

तत्त्वमसीत्यादौ बाधायां सामानाधिकरण्यं भगवत्पादैरपि 'व्याप्तेश्च समञ्जसम्' (३-३-९) इति सूत्रभाष्ये अङ्गीकृतमेव ॥

कूटस्थदीपे च आभासवादे काचन शंका उत्थापिता। सा चेत्थम् —

परागर्थप्रमेयेषु या फलत्वेन संमता।
संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥

इति वार्तिकविरुद्धोऽयमाभासवादः। अस्मिन् हि वार्तिके फलत्वेन संमता संवित् चिदाभास एव, न तु शुद्धं चैतन्यम्, तस्य प्रागपि सत्वेन फलत्वासंभवात्। सैव च वेदान्तोक्तिप्रमाणतः प्रमेया प्रतीयते। तथा च आभासस्य शुद्धब्रह्मणा अभेदः खल्वत्र प्रतिपाद्यते। तथा च भवदुक्तोऽयमाभासवादो वार्तिकविरुद्ध इत्याशंक्य श्रीविद्यारण्यैः —

इति वार्तिककारेण चित्सादृश्यं विवक्षितम्।
ब्रह्मचित्फलयोर्भेदः साहस्र्यां विश्रुतो यतः ॥

इति श्लोकेन वार्तिककारैः कृतः 'सैव मेयोऽर्थः' इति प्रयोगः सादृश्यात् गौण इति समाहितम् ॥

एवं सति आभासवादो वार्तिककारोपज्ञ इति केषांचित् कथनं कथं वा संगच्छत इति न प्रतीतिपथमारोहति। वार्तिककारा हि बृहदारण्यकवार्तिके 'स एष इह प्रविष्टः' इति श्रुतिवाक्यव्याख्यानावसरे आत्मनो बुद्ध्यादौ प्रवेशः 'प्रवेशो मुखबिम्बवत्' इति वदन्त आदर्शे मुखप्रवेशवत् प्रतिबिम्बतयेति समादधुः। प्रतिबिम्बस्य मुखाभिन्नतया तस्य ग्रहणे चक्षुःसंयोगः कथमुपपादनीय इति शंकायाम्,

दर्पणाभिहता दृष्टिः पर्यावृत्य स्वमाननम्।
व्याप्नुवन्त्यविभागेन भ्रान्तिं नो जनयेद्यथा ॥ (१-४-६१८)

इति प्रतिबिम्बवादिभिरुक्तमेव समाधानं वार्तिककारा अभ्यूचुः ॥

सुरेश्वराचार्याणां प्रतिबिम्बवाद एवाभिप्रेत इत्यत्र न केवलमिदं वार्तिकं प्रमाणं अपि तु श्रीविद्यारण्यैः पूर्वोक्तवार्तिकस्य सादृश्येन गौणतया व्याख्यानमपि (यथाश्रुते प्रतिबिम्बवादबोधनात्) प्रमाणमेव। अन्येषां तु वार्तिके चिदाभासपदप्रयोगः बहुशः अभ्यस्तः सुरेश्वरस्य आभासवाद एव संमत इति भ्रान्तिमजनयत्। किं च आभासपदस्य प्रतिबिम्ब एव रूढिः अत एव 'आभास एव च' इति सूत्रे प्रतिबिम्बे आभासपदं प्रयुयोज भगवान् सूत्रकारः॥

अपि च 'अत्रैव मा भगवानमूमुहत् न प्रेत्य संज्ञाऽस्ति' इति मोक्षे जीवनाशशङ्कां मैत्रेयीकृतां परिहरन् याज्ञवल्क्यः 'न वारेऽहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' इति जगाद। अनेन च मोक्षे जीवस्य न नाशः, अपि तु मात्राभिरसंसर्ग एव इति परिहारः सूच्यते। यदि च याज्ञवल्क्य आभासवादपरः स्यात् तदा आभासस्य मोक्षे नाशमेव ब्रूयात्, न ब्रूयात् 'अविनाशी वा अरेऽयमात्मा' इति। वार्तिककारोपि—

विशेषसंज्ञा योऽस्याभूत् विज्ञानात्मादिलक्षणा।
सम्यग्धीध्वस्तमोहस्य सा कृत्स्ना विनिवर्तते॥

इत्यर्थं वदन् प्रतिबिम्बवादमेवानुसरति न आभासवादम्॥

---

# संबन्धवार्तिके अधिकारिपरीक्षा

K. S. वेङ्कटरामशास्त्री

श्रीमच्छंकरभगवत्पादाचार्याणां निदेशानुसारेण तैत्तिरीयबृहदारण्यकभाष्ययोः श्रीदक्षिणामूर्तिस्तोत्रपञ्चीकरणयोश्च वार्तिकानि प्रणीय वार्तिकाचार्या इति प्रथामवाप्य श्रीसुरेश्वराचार्याः स्वीयगुरोराज्ञया तत्प्रतिष्ठितेषु चतुराम्नायपीठेषु प्रधानभूतं दक्षिणाम्नायशृङ्गगिरि श्रीशारदापीठव्याख्यान सिंहासनमधिरूढाः श्रीशृङ्गगिरि श्रीजगद्गुरुपरंपरायामादिमगुरवो व्यराजन्त । तेषामधिष्ठाने कुम्भाभिषेकः, श्रीमतां तत्रभवतामस्मदाचार्यपादानां श्रीसुरेश्वरसमारब्धश्रीजगद्गुरुपरंपराहारमणीनां, भारतभूमौ सर्वत्रापि विजययात्रां निर्वर्त्य तत्र तत्र ब्रह्मविद्यायाः श्रीजगदाचार्याणां च दिव्यं महिमानं प्रकाशीकृतवतां श्रीमदभिनवविद्यातीर्थस्वामिपादानामनुग्रहेण श्रीभगवत्पादावतारपरिपूते सुदिने प्रचलिष्यतीति, तत्सन्दर्भे प्रकाशीकरणाय श्रीसुरेश्वराचार्यस्मरणसंपादकं तन्महिमतत्प्रणीतग्रन्थप्रतिपाद्यविषयप्रदर्शकं नानाभाषासु पण्डितप्रकाण्डविरचितानेकलेखसमलंकृतं किमपि ग्रन्थरत्नं मुद्रापयन्ति भक्तप्रवराः । ग्रन्थे चास्मिन् श्रीसुरेश्वराचार्यविरचितबृहदारण्यकसम्बन्धवार्तिके अधिकारिनिरूपणमधिकृत्य किंचिदिव चिन्तयामो यथामति संग्रहेण ज्ञानपरिशुद्ध्यै ॥

शुक्लयजुर्वेदीयवाजसनेयिब्राह्मणोपनिषदः अन्वर्थं नाम बृहदारण्यकमिति। तदुक्तं भाष्ये — 'अरण्येऽनूच्यमानत्वात् आरण्यकं, बृहत्त्वात् परिमाणतो बृहदारण्यकम्' इति । वार्तिकेऽपि —

अरण्याध्ययनाच्चैतत् आरण्यकमितीर्यते ।
बृहत्त्वात् ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ इति । (सं. वा, ९)

त्रिविधव्युत्पत्त्या अविद्यां तत्कार्यं संसारं च नाशयति, ब्रह्म गमयति

इत्यर्थलाभेन उपनिषच्छब्दः ब्रह्मविद्यां बोधयति। तदर्थत्वात् ग्रन्थोऽपि उपनिषदित्युच्यते। एवं उपनिषन्नामनिर्वचनेन सर्वासामपि उपनिषदां मुक्तिरेव फलमिति लभ्यते। शास्त्रादौ च प्रेक्षावत्प्रवृत्त्यङ्गभूतं विषयप्रयोजनादिक-मवश्यमनुवर्णनीयम्। यदाहुः —

सिद्धार्थं सिद्धसंबन्धे श्रोतुं श्रोता प्रवर्तते।
शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः॥ इति।

शास्त्रारंभप्रयोजकं चैतत् भाष्योपक्रमे प्रदर्शितं 'तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रति-पत्तये' इति। अनेन विरक्तोऽधिकारी, अविद्यातत्कार्यनिवृत्तिः प्रयोजनं, ब्रह्मात्मैक्यविद्या तदुपायः, तदैक्यं विषयः ज्ञानफलयोरुपायोपेयत्वं संबन्धः इति ज्ञायते। अनन्तरं च अनुवर्णितं कर्मकाण्डेन सह संबन्धादिकम्। इत्थं भाष्यनिर्दिष्टस्यार्थजातस्य विवरणाय प्रवृत्ते संबन्धवार्तिके अधिकारः, संबन्धः, प्रामाण्यं, प्रमेयं इति चत्वारोंशाः सम्यक् विचारिताः। तदुक्तं श्रीविद्यारण्यस्वामिप्रणीते बृहदारण्यकवार्तिकसारे

अधिकारश्च संबन्धः प्रामाण्यं मेयनिर्णयः।
चातुर्विध्यं विचार्येदं वेदान्तोऽत्रावतारितः॥ इति।

(प्रमेयपरीक्षा १७८)

सर्वस्माद्विरक्तो यथाविधि त्यक्तकर्मा जिज्ञासुरेव वेदान्ते अधिकारी। न सिषाधयिषुः अविरक्तः कर्मजन्यफलकामः कर्मनिष्ठः, तस्य कर्मण्येवाधि-कारात्। तदुक्तम् —

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता॥ इति।

(सं. वा. १२)

अयं च उत्तमाधिकारी गुरुमुखतो वेदान्तविचारणया मनननिदिध्यासनाभ्यां च प्रत्यग्ब्रह्मैक्यसाक्षात्कारं लब्ध्वा सकार्याविद्याविनाशेन नित्यसिद्धां सच्चिदानन्दपरब्रह्मात्मस्थितिरूपां मुक्तिं लभते इति वस्तुस्थितिः ॥

सिद्धान्तमेतमसहमानाः बहवः तीर्थकाराः प्राधान्येन मीमांसकाः बहूनाक्षेपान् कथयन्ति । तथाहि—

यावज्जीवं कर्मणां कर्तव्यतया श्रुतिविहितत्वात् तत्त्याग एव न संभवति । विहितस्य त्यागोऽनर्थकरः । मुक्तिरूपफलमपि कर्मणैव जायते । कर्मातिरेकेण मुक्तिसाधनं किमपि वेदे न विहितम् । 'आम्नायस्य क्रियार्थत्वात्' 'विधिना त्वेकवाक्यत्वात्' इत्यादिना अक्रियार्थानां सिद्धबोधिवाक्यानां विधिशेषत्वेनैव प्रामाण्यं समर्थयति जैमिनिराचार्यः । अतः उपनिषदामपि विधिशेषतया विहितस्य, कर्मण एव अभ्युदयवत् मुक्तेरपि साधनत्वात् भवदभिमतोऽधिकारी न संभवति ॥

सामान्यतः कर्मफलस्य जन्यत्वेपि नित्यभूतमुक्तिहेतुत्वमपि कर्मणः संभवत्येव । आत्यन्तिकदेहोच्छित्तिरेव किल मुक्तिरित्युच्यते । सा च विना ज्ञानं कर्मणैव भवितुमर्हति । कथमिति चेत् सर्वशरीरारम्भकं कर्मैव । शरीरपरिग्रहेणैव बन्धो भवति । पूर्वोपार्जितानि सर्वाणि कर्माणि संभूय देहमेकमारभन्ते । तत्र ममाहंबुद्धिभागी कश्चित् दैवयोगात् यदि मुमुक्षुः स्यात् तदा निषिद्धकर्मत्यागात् नरकयोनिनिरासः । काम्यकर्मत्यागात् देवादिदेहाप्राप्तिः । नित्याद्यनुष्ठानात् अकरणनिमित्तप्रत्यवायाभावः । वर्तमानदेहारम्भककर्मणां च भोगेन क्षयः । अतो वर्तमानदेहपाते देहान्तरपरिग्रहेत्वभावात् आत्यन्तिकदेहोच्छित्तिः मुक्तिरनायाससिद्धा । एवं च भविष्यद्देहासंबन्धनिबन्धनाया मुक्तेः तत्संबन्धनिमित्ताभावमात्राधीनत्वात् निमित्ताभावे नैमित्तिकाभावात् कर्मणैव स्वरूपावस्थितिः मुक्तिः न तु ज्ञानात् । वेदे क्वचित् ज्ञानात् मुक्तिप्रतिपादनं आत्मज्ञस्य शोकादिनिवृत्तिप्रतिपादनं च

अर्थवाद एव। कर्तुरात्मनः कर्मशेषतया तज्ज्ञानस्यापि कर्मशेषत्वात् तादृशज्ञानफलश्रवणं अर्थवाद एवेति अवश्यमभ्युपगन्तव्यम्। ज्ञानफलस्य शोकादिनिवृत्तेः लोके कुत्रापि अदर्शनात्। सर्वत्रापि शोकमोहादिदर्शनात्। तदुक्तं —

निषिद्धकाम्ययोस्त्यागात्कर्मणोः, नित्यकर्मणः।
करणात्प्रत्यवायस्य हतेः, भोगेन च क्षयात्॥

शरीरारम्भकस्यैवं मुक्तिः सिद्धाऽन्तरात्मनः।
विनाऽप्यैकात्म्यसंबोधात्कर्मणैवोक्तवर्त्मना॥

ननु चात्मावबोधस्य निचाय्येति फलं श्रुतम्।
ब्रह्म वेदेति च तथा, नैवं तस्यार्थवादतः॥ (सं. वा. ४१-४३)

किं च भवदुक्तं अद्वैतब्रह्मात्मैकत्वज्ञानमेव न संभवति प्रत्यक्षविरुद्धत्वात्। प्रत्यक्षप्रमाणेन भेदस्य सत्यतया प्रतीयमानत्वात् तद्विरुद्धमर्थं न कदाचिदपि श्रुतिः बोधयेत्। स्वप्रकाशे ब्रह्मणि अविद्याया असंभवात् न तन्निवृत्त्यर्थं ज्ञानापेक्षा। किं च केवलात् वाक्यात् अपरोक्षात्मज्ञानमपि न संभवति। तस्मात् ज्ञानाधिकार्यसंभवात् वेदान्ता न विचारणीयाः इति॥

इत्थं परैरुद्भावितानाक्षेपान् सर्वानपि परिहरन्ति श्रीसुरेश्वराचार्याः। यथा वा कामनावन्तं प्रति कर्माणि विदधाति वेदः तथा विरक्तं प्रति स एव वेदः कर्मत्यागमपि विदधाति। 'एतमेव प्रव्राजिनो लोकं इच्छन्तः प्रव्रजन्ति,' 'त्यागेनैके' इति। अतः विहितानामपि कर्मणां यथाशास्त्रं त्यागः कर्तुं शक्यते। कर्मभिरेव मुक्तिरिति तु असंभावितमेव। कर्मफलस्य उत्पाद्याप्यविकार्यसंस्कार्यान्यतमरूपेणैव दर्शनात्, तस्य चानित्यत्वात् नित्यसिद्धमुक्तिसाधनत्वं कदाचिदपि कर्मणां न संभवति॥

चिकित्सयेव संप्राप्यं स्वास्थ्यं रोगार्दितस्य तु।
आत्माविद्याहतेर्बोधात्तत्कैवल्यमवाप्यते॥ (सं. वा. २८)

यदपि उक्तं निषिद्धकाम्यकर्मत्यागात् नित्यकर्मकरणात् शरीरसंबन्धनिवृत्तिरूपा मुक्तिः विनापि ज्ञानं सिध्यतीति तदपि न समञ्जसम्। लोके तावत् स्वरूपावस्थानरूपं स्वास्थ्यं रोगेणाभिभूतमासीत्। औषधसेवया रोगनिवृत्तौ पूर्वसिद्धमेव स्वास्थ्यं सम्यक् अभिव्यज्यते। एवमेव स्वात्मसंस्थितिरूपा मुक्तिः अविद्यातिरोहिता आसीत्। तस्मादेव बन्धः। ज्ञानेनाविद्यानिवृत्तौ स्वात्मसंस्थितिः नित्यसिद्धा अभिव्यज्यते। एवं च स्वरूपावस्थितेः नित्यसिद्धत्वात् काम्यादिवर्जनसाध्यत्वं कथमपि न संभवति। न हि सिद्धं साध्यं भवति। साध्यं चेत् तत् स्वरूपमेव न भवेत्। सिद्धं चेत् किमर्थं साधनापेक्षा ? सिद्धेऽपि साधनापेक्षा चेत् अनिर्मोक्षप्रसङ्गः॥

यदपि उच्यते — न हि स्वरूपावस्थानार्थं कर्मापेक्षा किं तु असकृत् विषयानुभवजनितास्वास्थ्यापनुत्त्यर्थम् इति तदपि न, असङ्गे आत्मनि परमार्थतो विषयसंपर्कस्य कथमप्यसंभवात्। कर्तृत्वादिकं आत्मनः स्वभावश्चेत् तस्य अनिवर्त्यत्वात् मुक्तिरेव न संभवेत्॥

न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः। (सं. वा. ५६)

अतः यथा स्वतः सिद्धमेव स्वास्थ्यं रोगादिना अभिभूतं औषधसेवया तन्निवृत्तौ अभिव्यज्यते एवं सच्चिदानन्दब्रह्मभावरूपा मुक्तिरपि स्वतःसिद्धा अज्ञानावृता ज्ञानेन अज्ञाननिवृत्तौ स्वयं प्रकाशते। यथा वा अन्धकारे अज्ञातो घटः प्रदीपेन तन्निवृत्तौ प्रकाशते। एवं चात्र ज्ञानस्यैवोपयोगः न कर्मणः। किं च महतामपि सूक्ष्मापराधदर्शनात् जन्मप्रभृति मरणपर्यन्तं सर्वदा निषिद्धकाम्यवर्जनं दुष्करमेव। कथंचित् काम्यकर्मणां त्यागेपि निषिद्धकर्मणां त्यागो न संभवति। नित्यकर्मभिः दुरितनिवृत्तावपि पूर्वबहुजन्मार्जितानामनन्तसुकृतकर्मणां अनिवारणात् तत्प्रयुक्तशरीरग्रहणस्यानिवार्यत्वात्। सर्वाण्यपि कर्माणि संभूय एकदेहमारभन्ते इति तु श्रुतिस्मृतिन्यायविरुद्धम्। अनन्तजन्मारम्भकाणां पापानां पुण्यानां च दर्शनात्।

|| श्रीः ||

# || पञ्चीकरणवार्तिकम् ||

## ( वार्तिकाभरणसहितम् )

—— * ——

श्रीगणपतये नमः || अविघ्नमस्तु ||

[1] ओं-नत्वा श्रीदक्षिणामूर्तिं ज्ञानेन्द्रगुरुरूपिणम् ।
विवृणोमि यथान्यायं पञ्चीकरणवार्तिकम् ॥

इह खलु परमेश्वराराधनार्थमनुष्ठितैर्नित्यादिकर्मभिः परिशुद्धान्तःकरणानां तत एव नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागशमादिसाधनसम्पन्नमुमुक्षुत्वाख्यसाधनचतुष्टयवतां ब्रह्मजिज्ञासूनां परित्यक्तसर्वकर्मणां परमहंसपरिव्राजकानां श्रवणमननिदिध्यासनपराणामरुणोपनिषदि[2] 'सन्धिं समाधावात्मन्याचरे'दिति समाधिर्विहितः । स च समाधिरोङ्कारेण कर्तव्य इति ओमित्यात्मानं युञ्जीतेति तैत्तिरीयश्रुतौ विहितः । युज समाधाविति स्मृतेः । स समाधिरोङ्कारेण कथं कर्तव्य इत्याकांक्षायां तं प्रकारं वक्तुं भगवता भाष्यकारेण पञ्चीकरणं नाम प्रकरणमुपदिष्टम् । तत्प्रकरणं व्याचिख्यासुर्भगवान् वार्तिककारश्चिकीर्षितस्योक्तानुक्त दुरुक्तचिन्तात्मकस्य तद्व्याख्यान[3]स्य वार्तिकस्य निर्विघ्नपरिसमाप्तिप्रचयगमनसिद्ध्यर्थं,

ओङ्कारश्चाथशब्दश्च द्वावेव ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

---

1. D. 4641 अ. श्लोकोऽयं न दृश्यते ।
2. अ. [ अरण्योपनिषदा ]
3. अ. रूप- ।

इति स्मृतेरोङ्कारोच्चारणं [1] तदर्थतत्त्वानुस्मरणात्मकं मङ्गलमाचरन् प्रकरणस्यार्थं संक्षेपेण श्रोतृबुद्धिसौकर्यार्थं कथयति —

ओङ्कारस्सर्ववेदानां सारस्तत्त्वप्रकाशकः ।
तेन चित्तसमाधानं मुमुक्षूणां प्रकाश्यते ॥ १ ॥

ओङ्कार इति । तेनोङ्कारेण चित्तसमाधानं प्रकाश्यत इति सम्बन्धः । चित्तसमाधानं ब्रह्मात्माभेदाकारतयावस्थानं, अखण्डब्रह्माकारवृत्तिरूपेण परिणामः, न तु शास्त्रान्तरप्रसिद्धचित्तवृत्तिनिरोध इत्यर्थः । अहं ब्रह्मास्मीत्यभेदेनावस्थानं समाधिरिति मूले वक्ष्यमाणत्वात् । 'समाधिस्संविदुत्पत्तिः परजीवैकतां प्रती'ति स्मृतेश्च । [2]ततश्चित्तस्याखण्डाकारवृत्तिरूपं ज्ञानं येन प्रकारेणोङ्कारेण जायते स प्रकारः प्रकाश्यत इत्यर्थः । ओङ्कारस्य ज्ञानजननप्रकाश[3]सामर्थ्यमाह—तत्त्वप्रकाशक इति । तत्त्वमस्यादिवाक्यवन्महावाक्यविधया विधिमुखेन नेति नेतीति वाक्यवन्निषेधविधया च तत्त्वप्रकाशकत्वं तस्य श्रुतिस्मृतिप्रसिद्धमित्यर्थः ॥

ननु तत्त्वमस्यादिवाक्येभ्यः ओङ्कारस्य को वा विशेषः ? येन ओंकारेणैव चित्तसमाधानं प्रकाश्यते तत्राह — सर्ववेदानां सार इति । मृदिव घटशरावादीनां, सर्ववेदानुस्यूततया कारणत्वात्तेषां सारः 'ओंकारेण सर्वा वाक् संतृण्णेति' श्रुतेरित्यर्थः । अयमाशयः — तत्त्वमस्यादिवाक्यानां मध्ये केनचित् वाक्येन चित्तसमाधानप्रकारे प्रकाशिते अप्रकाशितवाक्यान्तर [4]ध्यायिनां ततो वाक्यात् समाधानासिद्धेः वाक्यान्तरेष्वपि तत्प्रकाशयितव्यं स्यादिति यत्नगौरवं स्यात् । ओंकारेण तत्प्रकाशने तु तस्य सर्ववेदवाक्यसारत्वात् सर्वत्र वाक्ये समाधानप्रकारः [5]प्रकाश्यत इति न पृथक् कार्यः स्यात् । ओंकारेणैव सर्वेषां चित्तसमाधानसिद्धेश्च न यत्नान्तरं कार्यमिति वा लाघवमिति ॥

---

1. अ. तदर्थपरिसमाप्त्यर्थं । 2. अ. तच्चित्तस्य ।
3. अ. नास्ति । 4. अ. न्तराध्यायिनां । 5. अ. प्रकाशत ।

किं च वेदोच्चारणस्य पापनिवर्तकत्वस्मरणाल्लौकिकवाक्यापेक्षया वेदवाक्योच्चारणस्यार्थस्मरणद्वारा ज्ञानप्रतिबन्धककल्मषनिवर्तकत्वेन शीघ्रमप्रतिबन्धज्ञानोत्पादकत्वं विशेष इति वक्तव्यम् । अर्थबोधकत्वस्योभयत्रापि तुल्यत्वेन प्रकारान्तरेणातिशयस्य वक्तुमशक्यत्वात् । एवं च सति ओंकारस्य सर्ववेदसारत्वेन सर्ववेदात्मकत्वात्तदुच्चारणस्य सर्ववेदोच्चारणत्वात्ततो बहुकल्मषनिवृत्त्या शीघ्रमप्रतिबन्धज्ञानं ततो भवति ॥

किं च, ओमित्यात्मानं युञ्जीतेत्यादिबहुश्रुतिषु तस्मिन्नादरदर्शनाच्च तेन [1] चित्तसमाधानं प्रकाशनीयमिति । तत्राधिकारिणमाह—मुमुक्षूणामिति ॥

अत्र चोङ्कारप्रकाश्यं तत्त्वं विषयः, मोक्षः काम्यमानत्वान्मुख्यं प्रयोजनं, चित्तसमाधानशब्दितं तत्त्वज्ञानमवान्तरप्रयोजनम्, प्रकरणस्य फलस्य च जन्यजनकभावस्संबन्धः, अधिकारिणः स्वकीयप्रयोजनकत्वं [2] प्रकरणेन संबन्धः, मुमुक्षुरधिकारीत्यनुबन्धचतुष्टयं प्रवृत्त्यङ्गमर्थादुक्तमिति द्रष्टव्यम् ॥ १ ॥

इह भगवता भाष्यकारेणाध्यारोपापवादाभ्याम् ओंकारेण प्रत्यग्ब्रह्माभेदप्रतिपत्तिप्रकारं दर्शयितुमधिष्ठानस्य वास्तवं रूपम् अध्यारोप्यप्रपञ्चस्य सृष्टिं च सिद्धवत्कृत्य अध्यारोपमात्रमनूदितम् ॥

वार्तिकाचार्यस्तु उक्तानुक्तद्विरुक्तचिन्तात्मकत्वाद्वार्तिकस्यानुक्तं तदुभयं वक्तुकामः आदावध्यारोपात्पूर्वमवस्थितमधिष्ठानात्मस्वरूपमाह—

**आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम् ।**
**तत्स्वमायासमावेशाद्बीजमव्याकृतात्मकम् ॥ २ ॥**

आसीदेकमिति । ब्रह्म देशकालवस्तुपरिच्छेदशून्यं अत एव एकं सजातीयविजातीयस्वगतभेदशून्यं परं परमानन्दरूपं नित्यमुक्तं कालत्रयेऽपि

---

1 तेनैव समा  2 प्रयोजनजन

सर्वानर्थप्रपञ्चसंबन्धशून्यं सच्चिदानन्दात्मकं वस्त्वासीत्सृष्टेः प्रागित्यर्थः । 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं' 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्,' 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिभ्यः इत्यर्थः । यद्यप्यद्वितीयस्य आसीदिति कालसंबन्धो न युक्तस्तथापि श्रोतॄणां प्रतिपत्तिसौकर्यार्थं कालसंबन्धमारोप्योपदिशतीति बोध्यम् ॥

ननु जगदुपादानस्य कालत्रयेऽपि कथं तत्संबन्धशून्यत्वं तत्राह — अविक्रियमिति । निरवयवत्वेन विभुत्वेन च परिणामपरिस्पन्दयोरसंभवादुपादानत्वमपि न तस्यास्तीत्यर्थः । [1] कथं तर्हि तत्तेजोऽसृजतेत्यादिश्रुतिभिरुपादानत्वाभिधानं ब्रह्मण इत्याशंक्य तत्त्वतोऽन्यथाभावित्वलक्षणपरिणाम्युपादानत्वासंभवेऽपि माययाऽतत्वतोऽन्यथाभावित्वलक्षणं विवर्तोपादानत्वं संभवतीत्याह — तत्स्वमायेति । स्वस्य ब्रह्मणः शक्तिभूता स्वस्मिन्नध्यस्ता माया स्वमाया तस्याः समावेशः आध्यासिकतादात्म्यं तस्माद्बीजमुपादानमित्यर्थः । शुक्त्यादेर्विक्रियां विनापि रजताद्युपादानत्वदर्शनात् , अविक्रियस्यापि जगद्विवर्तोपादानत्वमविरुद्धमिति भावः ॥

ननु यत्र यत्कार्यं सूक्ष्मरूपेण वर्तते तदेव तस्य कार्यस्य बीजं, अन्यथा तन्तूनामपि घटं प्रति [2] कारणत्वं स्यात्तथा च नित्यमुक्ते ब्रह्मणि प्रागुत्पत्तेः जगतः सूक्ष्मरूपासंभवात् कथं तद्बीजत्वमत आह — अव्याकृतात्मकमिति । [3] स्वभावतो नित्यमुक्तस्य सूक्ष्मकार्याश्रयत्वासंभवेऽपि मायायां तत्संभवात् तद्द्वाराऽव्याकृतात्मकमनभिव्यक्तनामरूपात्मकजगदाश्रयः । 'तद्धेदं तर्हि अव्याकृतमासीत्तन्नामरूपाभ्या'मिति श्रुतेः । अतो बीजत्वं युक्तमित्यर्थः ॥ २ ॥

एवं ब्रह्मणः प्रपञ्चोपादानत्वमुपपाद्येदानीं तस्मिञ्जगत अध्यारोपार्थं तत्सृष्टिमाह —

---

1, तर्हि कथं 2, बीजत्वं 3. स्वतो

तस्मादाकाशमुत्पन्नं शब्दतन्मात्ररूपकम् ।
स्पर्शात्मकस्ततो वायुस्तेजो रूपात्मकं ततः ॥ ३ ॥

आपो रसात्मिकास्तस्मात्ताभ्यो गन्धात्मिका मही ।

[1] तस्मादिति । तस्य स्थूलाकाशवैलक्षण्यमाह — शब्दतन्मात्ररूपकमिति । शब्द एव तस्मिन्नाकाशे मात्रा मीयते न त्वत्रकाशदातृत्वशान्तत्वघोरत्वादयो यस्मिन् तच्छब्दतन्मात्रं, तदेव रूपं यस्य गुणगुणिनोरभेदात् । तदा शब्दमात्रमेव गम्यते । अवकाशदानादिव्यवहारविशेषादयो न सन्ति यस्मिन् तत्सूक्ष्ममाकाशमित्यर्थः । तदुक्तं विष्णुपुराणे —

तस्मिंस्तस्मिंश्च सा मात्रा तेन तन्मात्रता स्मृता ।
न शान्ता नापि ते घोरा न मूढास्ते विशेषतः ॥

इति । स्पर्शात्मक इत्यादावेवमेव योज्यम् ॥

तत्तद्भूतानामसाधारणगुणान् पूर्वपूर्वकारणगुणानुस्यूत्या प्राप्तगुणान्तराणि च संगृह्याह —

शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् ॥ ४ ॥

शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते ।
शब्दस्पर्शरूपरसैः गुणैरापश्चतुर्गुणाः ॥ ५ ॥

शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ।

शब्दैकगुणमिति । पूर्वपूर्वभूतभावमापन्नस्यैव ब्रह्मण उत्तरोत्तरभूतोपादानत्वात् पूर्वपूर्वगुणानुस्यूतिरुत्तरस्मिन्न्याय्येति भावः ॥

सूक्ष्मभूतानामुत्पत्तिमुक्त्वा तेषां कार्यमाह —

---

1. तस्मादित्यादिना ।

**तेभ्यः समभवत्[1] भूतं लिङ्गं सर्वात्मकं महत् ।। ६ ।।**

**तेभ्य इति** । लिङ्गशरीरं च ज्ञानेन्द्रियाणि पञ्चैवेत्यादिना वक्ष्यमाणं । ननु इन्द्रियाणि अहंकारकार्याणि, प्राणास्तु करणानां सामान्यवृत्तिरिति सांख्याः पौराणिकाश्चाहुः । तत्कथं भूतकार्यत्वं अत आह—**भूतमिति** । भूतात्मकं तत्कार्यमित्यर्थः । 'अन्नमयं हि सोम्य मनः' इत्यादिश्रुतेश्चक्षुरादीनां तेजआदिभूतैः उपचयदर्शनात् तेजआदिभूतग्राहकत्वाच्च भौतिकत्वमित्यर्थः । **सर्वात्मकमिति** । हिरण्यगर्भोपाधिभूतस्य समष्टिलिङ्गशरीरस्य सर्वव्यष्टिलिङ्गशरीरव्यापित्वात् सर्वात्मकत्वमित्यर्थः ॥

यद्वा वैशेषिकादयस्तु चक्षुरादीन्द्रियाणि भौतिकान्येव; तानि शरीरेण सह जायन्ते, सहैव नश्यन्ति । न तु शरीरान्तरसंचारि चक्षुरादिकरणसङ्घातरूपं लिङ्गं नाम किंचिदस्ति । मन एव तु केवलं शरीरान्तरसंचारीत्याहुः । तन्मतं निराकरोति — **सर्वात्मकमिति** । क्रमेण प्रतिपद्यमानदेवादिसर्वशरीरेषु प्रविश्य तेषामात्मतया वर्तमानमित्यर्थः । केवलस्य व्यापकस्यात्मनः स्वत उत्क्रान्त्यादीनामसंभवात्, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेश्च, 'तदापीतेः संसारव्यपदेशादिति' न्यायाच्च करणसमुदायरूपमात्मन उत्क्रान्त्याद्युपधिभूतं लिङ्गं शरीरान्तरसंचारीति अङ्गीकर्तव्यमित्यर्थः ॥

**अत्रेदमवधेयम्** — मायायास्त्रिगुणात्मकत्वात् तत्कार्याणि भूतान्यपि तादृशान्येव । अत्र भूतानां सात्त्विकांशेभ्यः प्रत्येकं श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि जायन्ते । तेभ्यो मिलितेभ्यः पञ्चभ्यो मनोबुद्ध्यहंकारचित्तात्मकमन्तःकरणं जायते । तेषामेव राजसांशेभ्यः प्रत्येकं कर्मेन्द्रियाणि वागादीनि पञ्च क्रमेण जायन्ते । तेभ्य एव मिलितेभ्यः प्राणादिपञ्चवृत्तिकः प्राणो जायते । तत्र चित्ताहंकारयोर्मनोबुद्ध्योरन्तर्भावेनान्तःकरणस्य द्वैविध्ये सति ज्ञानेन्द्रियपञ्चकं,

---

1. सूत्रं

कर्मेन्द्रियपञ्चकं, वृत्तिभेदेन पञ्च प्राणाः, मनो बुद्धिश्चेति सप्तदशकं लिङ्गं तेभ्यस्समभवदिति । एवमेव समष्टिलिङ्गशरीरं हिरण्यगर्भोपाधिभूतं गोव्यक्तिषु गोत्वमिव व्यष्टिलिङ्गेष्वनुस्यूतं जायते । इयांस्तु विशेषः —

कृत्स्नब्रह्माण्डकारणतयाऽनुस्यूतेभ्यः सात्विकेभ्यः सूक्ष्मभूतेभ्य एकैकतः समष्टिज्ञानेन्द्रियाणि, समुदितेभ्यस्तेभ्य एव समष्ट्यन्तःकरणं, एवं राजसेभ्यः कर्मेन्द्रियाणि प्राणाश्च जायन्ते । समष्टिलिङ्गारंभकतया तदनुस्यूतेभ्यः कृत्स्नेभ्यः सात्विकादिभूतेभ्यः व्यष्टिकरणानीति, अत एव सगुणब्रह्मोपासकस्य समष्ट्यपरिच्छिन्नसगुणब्रह्मभावेन परिच्छेदाभिमाने निवृत्ते व्यष्टिलिङ्गं समष्टिलिङ्गतां प्रतिपद्यते । ततश्च हिरण्यगर्भोपाधिलिङ्गाभिमानेन हिरण्यगर्भताप्राप्तिरिति तत्र तत्र भाष्यकारादिभिरुच्यमानं संगच्छते । अंशकार्यस्य अंशिकार्यान्तर्भावादिति ॥ ६ ॥

एवं लिङ्गशरीरवत्तेभ्य एव भूतेभ्यः पञ्चीकरणेन स्थूलतामापन्नेभ्यः समष्टिव्यष्टिस्थूलशरीरं जातमित्याह —

ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडभूत् ।
पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः ॥ ७ ॥

तत इति । सूक्ष्मेभ्यो भूतेभ्यः स्थूलत्वाविष्टवेषेण जातानि स्थूलानि भूतानि । तेभ्यो विराट् स्थूलं शरीरं द्विप्रकारमपि अभूदित्यर्थः । अत्रापि भूतेभ्योंशिभ्योऽण्डं तदंशेभ्यः पिण्डमिति उपास्यवैश्वानरात्मकत्वप्राप्तिः पूर्वोक्तरीत्या द्रष्टव्या । सूक्ष्मभूतेभ्यः भिन्नानि स्थूलानि जातानीति भ्रमं वारयति — पञ्चीकृतानीति । तान्येव पञ्चीकृतानि सन्ति स्थूलानीत्यर्थः ॥

पञ्चीकरणप्रकारमाह —

पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा ।
एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८ ॥

एकैकं भागमेकस्मिन् भूते संवेशयेत्क्रमात् ।
ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि ॥ ९ ॥

वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् ।
पञ्चीकरणमेतत्स्यादित्याहुस्तत्ववेदिनः ॥ १० ॥

पृथिव्यादीनीति । एकैकं भूतं द्वेधा विभज्य तयोरेकं चतुर्धा विभज्य चतुरो विभागान् तत्तद्व्यतिरिक्तभूतचतुष्टये योजयेत् । ततश्च स्वांशोऽर्धमितरभूतानामंशाश्चत्वारोपि मिलित्वाऽर्धमिति एकैकं भूतं पञ्चात्मकं संपद्यत इत्यर्थः । वाय्वादीति । वाय्वादिभागाश्चत्वार आकाशभागोऽर्धं च मिलित्वा आकाशभूतस्य भागाः पञ्चेति पूर्वेण अन्वयेन योज्यम् । वाय्वादिष्विति । वायुभागोऽर्धं भूतान्तराणां चतुर्णां भागाश्चत्वारस्ततश्च वायोर्भागाः पञ्च भवन्तीत्येवं क्रमेण सर्वत्रातिदिशेदित्यर्थः ॥

अत्र केचिद्वाचस्पतिमिश्रमतानुसारिणः पञ्चीकरणं यद्यपि संप्रदायसिद्धं तथापि युक्तिविरुद्धत्वात्त्रिवृत्करणमेवादरणीयं । पञ्चीकरणपक्षे पृथिव्यादिभागानां आकाशवाय्वोः प्रवेशे रूपवत्त्वात्महत्वाच्च तयोश्चाक्षुषत्वं स्यात् । यद्याकाशादिभागानामाधिक्यादितरभागानां च स्वल्पत्वादधिकेन स्वल्पस्याभिभूतत्वात् 'वैशेष्यात्तु तद्वादस्तद्वाद' इति न्यायेन चाक्षुषत्वाभावः, तर्हि आकाशादौ पृथिव्यादिभागकल्पना व्यर्था, तेषां व्यवहारागोचरत्वात् । अथापि श्रुतिसिद्धत्वादेव कल्प्यत इति यद्युच्येत, तथापि त्रिवृत्करणमेव श्रुतिसिद्धं, 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' श्रुतेः । न पञ्चीकरणं तच्छ्रुतेरभावादित्याहुः । तत्राह — इत्याहुस्तत्ववेदिन इति । श्रुतिस्मृतिन्यायतत्ववेदिन इत्यर्थः ।

श्रुतिस्तावदाथर्वणे 'पृथिवी च पृथिवीमात्रा च' इत्यादिना स्थूलसूक्ष्मभूतकथन-प्रस्तावे 'वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च' इति तयोरपि स्थूलसूक्ष्मभेदं दर्शयति। स्थूलत्वं च पञ्चीकृतत्वमेवान्यस्यासंभवात्। 'पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः' इत्युक्तत्वाच्च। स्मृतिरपि स्कान्दे ब्रह्मगीतासु पञ्चीकृत्य शिवाज्ञयेत्यादिः। न्यायश्च श्रुतौ त्रिवृत्करणोक्तिबलादत्रिवृत्कृतानां स्थूल-व्यवहारानर्हत्वं गम्यते; अन्यथा तदुक्तिवैयर्थ्यात्। अत्रिवृत्कृतभूतकार्याणा-मिन्द्रियादीनामतीन्द्रियत्वेन स्पष्टव्यवहारादर्शनाच्च त्रिवृत्करणमर्थवदिति वक्तव्यम्। एवं पञ्चीकरणाभावे आकाशवायुभ्यामपि स्पष्टावकाशदानादिस्थूलव्यवहारो न स्यादित्येवं श्रुतिस्मृतिन्यायादिमत् पञ्चीकरणमङ्गीकर्तव्यम्। त्रिवृत्करणश्रुतिस्तु, छान्दोग्ये भूतत्रयसृष्टिश्रुतिः यथा पञ्चभूतोपलक्षणार्था वियदधिकरणन्यायेन, तथा त्रिवृत्करणश्रुतिरपि पञ्चीकरणोपलक्षणार्था। चाक्षुषत्वापत्तिस्तु वैशेष्यात्तु तद्वाद इति न्यायेन अर्थभूयस्त्वादेव परिहृतेति भावः॥ ८-१०॥

एवमुपोद्घाततया सृष्टिमभिधाय नित्यमुक्ते आत्मनि अतस्मिंस्त-[1]द्बुद्धित्वेन मायाकार्यत्वेन च तस्य आरोपत्वं चोक्तम्। इदानीं तस्य ओङ्कारेणापवादसौकर्याय आरोपितस्य कृत्स्नस्य त्रैविध्यकरणार्थं पञ्चीकृते-त्याद्याचार्यवाक्यं व्याचष्टे — **पञ्चीकृतानीत्यादिना**।

**पञ्चीकृतानि भूतानि तत्कार्यं च [2] विराड्भवेत्।**
**स्थूलं शरीरमेतत्स्यादशरीरस्य चात्मनः॥ ११॥**

विराट्शब्दार्थमाह — **स्थूलं शरीरमिति**। अनेन व्यष्टिसमष्टि-शरीरद्वयमप्युक्तम्। ननु तस्य स्थूलशरीराङ्गीकारे, अस्थूलमित्यादि-श्रुतिविरोध इत्याशङ्क्य वस्तुतः अशरीरस्य शरीरसंबन्धासम्भवं वदन् तस्य मृषात्वमाह — **अशरीरस्य चेति**। चोऽवधारणे। वस्तुतः कालत्रयेऽपि शरीरसम्बन्धरहितस्येत्यर्थः [3]॥ ११॥

---

1. तद्रूपत्वेन। 2 विराड्भूत्। 3. हितस्यैवेत्यर्थः।

ननु इन्द्रियैरर्थोपलब्धिरिति मूलमनुपपन्नं । अद्वितीयात्मनि इन्द्रियादिः भेदाभावात् । आरोपितस्य तस्य सत्त्वेऽपि इन्द्रियाणां जडानां स्वतः प्रवृत्त्यसंभवः । न चात्माऽसङ्गः तत्प्रवर्तको भवति । अतस्तेषां विषय-संबन्धाभावादर्थोपलब्धिर्न संभवतीत्याशङ्क्याह —

**अधिदैवतमध्यात्ममधिभूतमिति त्रिधा ।**
**एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः ॥ १२ ॥**

**अधिदैवतमिति** । अधिदैवतमित्यादिषु सप्तम्यर्थेऽव्ययीभावः । देवतासु विद्यमानं दिगादिकमधिदैवतम् । आत्मनि कार्यकरणसंघाते शरीरे विद्यमानं श्रोत्राद्यध्यात्मम् । भूतेषु विद्यमानं विषयभूतं शब्दादिकमधिभूतम् । 'तेभ्यः समभव' दिति वार्तिके भूतानामिन्द्रियाणां च सृष्टिः कण्ठरवेणोक्ता । इन्द्रियसृष्ट्युक्त्यैव समष्टीन्द्रियाभिमानिचैतन्यानामेव देवतात्वात् तत्सृष्टि-रप्यर्थादुक्तेति त्रिविधस्याप्यात्मन्यध्यारोपो दर्शित इति भावः ॥ १२ ॥

एवं सति इन्द्रियैरर्थोपलब्धिरिति वाक्यमुपपन्नं, तेन देवानां इन्द्रिय-प्रवर्तकत्वोपपत्तिरित्याह —

**इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्वितैः ।**
**शब्दादिविषयं ज्ञानं तज्जागरितमुच्यते ॥ १३ ॥**

**इन्द्रियैरिति** । एवं सति देवतानुग्रहान्वितैरिन्द्रियैरर्थविज्ञानं जायते । तत् ज्ञानं जागरितमुच्यते इत्येवं वाक्यभेदेन ज्ञानपदद्वयस्या[1]न्वयो द्रष्टव्यः । यद्वा, इन्द्रियजन्यज्ञानम्, अन्यत् शास्त्रानुमानादिजन्यं ज्ञानं च सर्वं जागरितमिति ज्ञानपदद्वयस्यापुनरुक्तिः । अत्रोपलब्धिरित्युक्ते तुरीये गतः, अतः **अर्थेति** । विषयोपलब्धिरित्यर्थः । सुषुप्ते अज्ञानस्य विषयस्योपलब्धेरर्थपदं शब्दादिपरत्वेन व्याख्यातं शब्दादिविषयमित्यनेन । तथापि स्वप्ने वासनारूपशब्दाद्यर्थोपलब्धे-

1. स्याप्य ।

स्सत्वात् अतिव्याप्तिवारणाय इन्द्रियैरित्युक्तम् । न च तत्रापि इन्द्रियाणि दृश्यन्ते इति वाच्यं तेषां वासना[1]रूपत्वात् । न च वासनारूपैरपि तैरर्थोपलब्धिस्तत्रास्तीति वाच्यम् — वासनारूपाणां तेषामर्थानामिवाविषयत्वेन[2] साक्षिणा [3]भास्यमानत्वमेव न तूपलब्धौ करणत्वं । तत्प्रतीतिस्तु जाग्रत्काले करणत्वप्रतीतेः तद्वासनामात्रं देवतानुग्रहाभावेन मुख्यकरणत्वाभावादित्याशयेन देवतानुग्रहान्वितैरित्युक्तम् ॥

नचैवमपि मनः करणं तत्रास्तीति वाच्यं तस्येन्द्रियत्वाभावात् 'मनस्सर्वेन्द्रियाणिच' इत्यादिश्रुतौ इन्द्रियेभ्यः पृथग्गणनात् । अत एव श्रुतेरिन्द्रियत्वाभावनिश्चयात् 'मनष्षष्ठानीन्द्रियाणि' इत्यत्र विजातीयेनैव संख्यापूरणं कार्यं। यजमानपञ्चमा इडां [4] प्राश्येत्यत्रानृत्विजापि विजातीयेन यजमानेन संख्यापूरणदर्शनात् । सजातीयेनैव संख्यापूरणन्यायस्तु गुहां प्रविष्टावित्यधिकरणसिद्धसन्देहस्थल एव, न तु मानान्तरेण विजातीयत्वनिश्चयस्थलेऽपीति भावः । स्वप्ने मनस अर्थोपलब्धिं प्रत्युपादानत्वेन करणत्वाभावाच्च न तदादायातिव्याप्तिरिति ॥

न चैवमपि समाधिमूर्छयोरव्याप्तिः । तत्रेन्द्रियैरुपलब्ध्यभावात् तयोर्जागरणत्वादिति वाच्यं, मूर्छायाः 'मुग्धेऽर्धसम्पत्तिः परिशेषा'दिति न्यायेनाजागरणत्वात्, समाधेस्तुरीयावस्थात्वेन अजागरणत्वाच्चेति ॥ १२ ॥

इदानीमध्यात्मादिविभागं सुखप्रतिपत्त्यर्थं विविच्य दर्शयति — क्षेत्रमित्यादिना ईश्वरोऽत्राधिदैवतमित्यन्तेन ।

श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम् ॥ १४ ॥

---

1. मात्र । 2. मिव विषयत्वेन ।
3. भास्यत्वादेव । 4 भक्षयन्तीत्यत्र ।

अत्राधिभूतमिति तत्तदिन्द्रियविषय उच्यते । शब्दस्वरूपं श्रोत्रेन्द्रियस्य विषय इत्यर्थः । एवं सर्वत्र योज्यम् ।

दिश इति । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नित्यादिश्रुत्या दिगादीनामधिष्ठातृदेवतात्वावगमात्तेषु तथात्वमङ्गीकार्यमित्यर्थः. एतेन जीवाधिष्ठितानामेवेन्द्रियाणां प्रवृत्त्युपपत्तेस्तदधिष्ठात्र्यो देवता न सन्तीति वदन्तो वैशेषिकादयो निरस्ताः । श्रुतिविरोधादसंगस्य जीवस्याधिष्ठातृत्वानुपपत्तेः । यद्यपि श्रुतौ अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिना वागग्न्यादिक्रमेणाध्यात्मादिविभाग उक्तः तथापि तदुत्पादकतद्ग्राह्यभूतक्रमेण तत्रापि ज्ञानेन्द्रियपूर्वकत्वात् कर्मेन्द्रियप्रवृत्तेः तदुत्पादकग्राह्यभूतक्रमेणाध्यात्मादिक्रम इहोक्तः ॥ १४ ॥

त्वगध्यात्ममिति प्रोक्तं स्प्रष्टव्यं स्पर्शलक्षणम् ।
अधिभूतं तदित्युक्तं वायुस्तत्राधिदैवतम् ॥ १५ ॥

वायुरिति । यद्यपि 'ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्निति' श्रुतौ ओषधिवनस्पतीनां त्वग्देवतात्वमुक्तम् । तथापि तेषां देवतात्वाप्रसिद्धेस्तेषामधिष्ठाता वायुरेव ओषध्यादिशब्देनोक्त इति मत्वा इह वायुरित्युक्तम् । वृक्षाणां वायव्यत्वं च श्रुत्यादिप्रसिद्धमिति भावः ॥

चक्षुरध्यात्ममित्युक्तं द्रष्टव्यं रूपलक्षणम् ।
अधिभूतं तदित्युक्तमादित्योऽत्राधिदैवतम् ॥ १६ ॥

जिह्वाध्यात्मं तथाऽऽस्वाद्यमधिभूतं रसात्मकम् ।
वरुणो देवता तत्र जिह्वायामधिदैवतम् ॥ १७ ॥

जिह्वेति । रसात्मकमास्वाद्यमधिभूतमित्यन्वयः । वरुणो वा तं गृह्णातीत्यादौ व्याधिविशेषे वरुणशब्दप्रयोगात् तद्व्यावृत्त्यर्थं देवतारूपो वरुणो-

ऽधिदैवतमित्युक्तम् । वरुणस्याधिष्ठातृत्वात् रसस्य चात्रात्मकत्वात् 'शन्नो मित्रश्शं वरुणः' इत्यत्र [1] देवतानुगतस्य गणनाच्च तत्र देवतेति भावः ॥

घ्राणमध्यात्ममित्युक्तं घ्रातव्यं गन्धलक्षणम् ।
अधिभूतं तदित्युक्तं [2] पृथिव्यत्राधिदैवतम् ॥ १८ ॥

घ्राणेन्द्रियस्य पार्थिवत्वात् पृथिव्यभिमानिदेवतायास्तत्र देवतात्वमुचितमिति पृथिव्यत्राधिदैवतमित्युक्तम् । यद्वा 'दिग्वातार्कप्रचेतोऽश्वीति' संप्रदायश्लोके अश्विनोर्घ्राणाधिदेवतात्वोक्तेः, बडवाभूतसूर्यपत्नीनासिकाभ्यां निर्गतत्वेन पुराणप्रसिद्धेश्च तयोरेवाधिदैवतत्वौचित्याच्च इह पृथिवीशब्देन तावेवोक्तौ । अपूतौ वा इमौ मनुष्यचराविल्यत्र तयोर्मनुष्यवत् पृथिवीसम्बन्धश्रवणात् । यद्यपि 'वायुः प्राणो भूत्वा नासिके प्राविश' दित्यत्र वायोर्देवतात्वमुक्तं तथापि नासिकासंचारिश्वासरूपवायोर्गन्धग्रहणसहकारित्वमात्रेण तथोक्तम् । वस्तुतस्तु तत्र वायुशब्देन तत्सहचारी पूर्वोक्तदेवतैव ग्राह्येति न विरोधः ॥ १८ ॥

वैशेषिकादयः — कर्मेन्द्रियाणि न सन्त्येव हस्ताद्यवच्छिन्नात्मनि प्रयत्नोत्पत्तौ ततः एव हस्तादौ व्यापारोत्पत्तिसंभवादित्याहुः । तदयुक्तं, अग्निर्वाग्भूत्वेत्यादिश्रुतिविरोधात् । कुणित्वादिप्रापककर्मप्रतिबद्धेन्द्रियाभावे कुणित्वपंगुत्वाद्यसंभवापत्तेः । अन्यथा तत्तद्गोलकावच्छिन्नात्ममनस्संयोगादेव ज्ञानोत्पत्तिसंभवेन ज्ञानेन्द्रियाणामप्यभावप्रसङ्गाच्चेत्यभिप्रेत्य कर्मेन्द्रियेषूक्तं विभागमाह वागित्यादिना ।

वागध्यात्ममिति प्रोक्तं वक्तव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तमग्निस्तत्राधिदैवतम् ॥ १९ ॥

वागादयश्च यथाक्रमं राजसाकाशादिभूतकार्याणीति बोद्धव्यम् ॥ १९ ॥

---

1. अ. इन्द्रिय देवता । 2. अश्विनावधिदैवतम् ।

हस्तावध्यात्ममित्युक्तमादातव्य च यद्भवेत् ।
अधिभूतं तदित्युक्तमिन्द्रस्तत्राधिदैवतम् ॥ २० ॥

इन्द्र इति । 'इन्द्रो मे बले श्रितः' इति श्रुत्या इन्द्रस्य बलाधिष्ठातृत्वाद्बलस्य बाह्वोर्बलमिति श्रुत्या बाहुधर्मत्वादिन्द्रो हस्ताधिदैवतमित्यर्थः ॥

पादावध्यात्ममित्युक्तं गन्तव्यं तत्र यद् भवेत् ।
अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवतम् ॥ २१ ॥

विष्णोर्विक्रमणादिकर्तृत्वाद्विक्रमणहेतुपादाधिष्ठातृत्वं तस्योचितमित्यर्थः ॥

पायुरिन्द्रियमध्यात्मं विसर्गस्तत्र यो भवेत् ।
अधिभूतं तदित्युक्तं मृत्युस्तत्राधिदैवतम् ॥ २२ ॥

उपस्थेन्द्रियमध्यात्मं स्त्र्याद्यानन्दस्य कारणम् ।
अधिभूतं तदित्युक्तमधिदैवं प्रजापतिः ॥ २३ ॥

प्रजापतिरिति । यद्यपि 'आपो रेतो भूत्वा शिश्नं प्राविशन्नि'ति श्रुतावपां देवतात्वमुक्तम्; तथाप्यत्रापश्शब्देन तदुपलक्षितपञ्चभूतोपाधिकः प्रजापतिरेवोक्त इति भावः ॥ २२–२३ ॥

मन्तव्यबोद्धव्यादिकं सर्वं यद्यपि श्रोतव्यादिरूपमेव तथापि मन्तव्यत्वादिरूपेण श्रोतव्याद्यपेक्षया भेदमङ्गीकृत्य तेषां मनआदिविषयत्वमाह मन्तव्यमित्यादिना —

मनोऽध्यात्ममिति प्रोक्तं मन्तव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं चन्द्रस्तत्राधिदैवतम् ॥ २४ ॥

बुद्धिरध्यात्ममित्युक्तं बोद्धव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं अधिदैवं बृहस्पतिः ॥ २५ ॥

बृहस्पत्यादीनां तु बुद्ध्यादिदेवतात्वमागमादवगन्तव्यम् । इतरेषां तु 'अग्निर्वाग्भूत्वा' इत्यादिश्रुतौ तथात्वं स्पष्टमिति ॥ २४-२५ ॥

अहङ्कारस्तथाध्यात्ममहंकर्तव्यमेव च ।
अधिभूतं तदित्युक्तं रुद्रस्तत्राधिदैवतम् ॥ २६ ॥

चित्तमध्यात्ममित्युक्तं चेतव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं क्षेत्रज्ञोऽत्राधिदैवतम् ॥ २७ ॥

तमोऽध्यात्ममिति प्रोक्तं विकारस्तस्य यो भवेत् ।
अधिभूतं तदित्युक्तमीश्वरोऽत्राधिदैवतम् ॥ २८ ॥

क्षेत्रज्ञः साक्षी ; ईश्वरस्तु मायाप्रवर्तकः जगत्कारणमिति भेदः ॥

एवमध्यात्मादिविभागं प्रदर्श्य इन्द्रियैरर्थोपलब्धिर्जागरितमिति वाक्ये इन्द्रियग्रहणं करणोपलक्षणार्थमित्यभिप्रेत्य वदन् वाक्यार्थमुपसंहरति—

बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः ।
स्वं स्वं च विषयं ज्ञानं तज्जागरितमुच्यते ॥ २९ ॥

बाह्येति । अत्र ज्ञानमिति कर्मेन्द्रियव्यापाराणामुपलक्षणं, अन्यथा कर्मेन्द्रियस्यासंग्रहापातात् स्वरूपनिरूपणवैयर्थ्यं स्यादिति ॥ २९ ॥

तदुभयाभिमानीत्यत्रोभयशब्दार्थं वदन् तद्वाक्यार्थमाह—

येयं जागरितावस्था शरीरं करणाश्रयम् ।
यस्तयोरभिमानी स्याद्विश्व इत्यभिधीयते ॥ ३० ॥

येयमिति । विश्वस्य स्थूलसूक्ष्मकारणशरीरत्रयाभिमानित्वात् सूक्ष्मशरीर[1]ग्रहणाय शरीरं करणाश्रयमित्युक्तं । अत एव तमश्शब्दितकारणशरीरं अपि

1. अ. संग्रहाय ।

तमोऽध्यात्ममित्यत्रोक्तम् । अन्यथा जागरावस्थोक्तिप्रस्तावे तस्यानवसरप्रसङ्गात् । तच्चेह शरीरग्रहणेन गृहीतमिति बोध्यम् ॥ २० ॥

ननु 'तत्कार्यं च विराड्भवे' दित्यत्र समष्टिव्यष्टिशरीरयोरभिधानात् समष्टौ च वैश्वानरशब्दितस्य वैराजस्याभिमानित्वात् कथं व्यष्टयभिमानिनो विश्वस्य तदुभयाभिमानित्वमित्यत आह—

**विश्वं वैराजरूपेण पश्येद्भेदनिवृत्तये ।**

**विश्वमिति ।** वैराजस्य रूपमिव रूपं यस्य सः तथा । भावप्रधानो निर्देशः, वैराजरूपत्वेनेत्यर्थः । वैराजं विश्वात्मत्वेन पश्येदित्यर्थः । हिरण्यगर्भरूपेण चिन्तयेदित्यादावप्येवमेवार्थः । यथाश्रुते विश्वस्य वैराजान्तर्भावे विश्वस्य प्राधान्यं न स्यात् । तथा च सति प्रत्यगात्मबोधनं न भवेत् । वैराजादीनामीश्वरावस्थाभेदत्वेन प्रत्यगात्मावस्थाभेदत्वाभावात् । तथा सति 'अकारमात्रं विश्वः स्यात्' 'अकारं पुरुषं विश्वमुकारे प्रविलापयेत्' इत्यादिवक्ष्यमाणा विश्वादिप्रधानव्यपदेशाः विरुध्येरन्निति । एतदुक्तं भवति — एकस्यैव चैतन्यस्य समष्टिव्यष्ट्यभिमानभेदेन भेदात्, जीवानामपि 'सर्वे जीवाः सर्वमयाः' इति श्रुत्या अपरिच्छेदात् परिच्छिन्नव्यष्ट्यभिमानकृतः परिच्छेदभ्रमः । तत्र समष्टिव्यष्टयोः स्थूलत्वसाम्येनाभेदे चिन्तिते [1] परिच्छेदाभिमाननिवृत्त्या परिच्छेदभ्रमनिवृत्तौ तदभिमानिनोरपि विश्ववैराजयोरभेददर्शनं स्यादिति ॥

'एतत्त्रयमकारः' इत्यादिनोक्तम् पादानां मात्राणां चाभेदं श्रौतक्रममनुसृत्यैव, 'अकारमात्रं विश्वः स्यात्' इत्यादिना वक्ष्यामीत्यभिसंधाय अपञ्चीकृतेत्यादिनोक्तं द्वितीयपादं व्याचष्टे **ज्ञानेन्द्रियाणीत्यादिना**—

**ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च [2] ॥ २१ ॥**

1. ब. परिच्छिन्न 2. ण्यपि ।

श्रोत्रं त्वङ् नयनं [1]घ्राणं जिह्वा धीन्द्रियपञ्चकम् ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ॥ ३२ ॥

मनो बुद्धिरहङ्कारश्चित्तं चेतश्चतुष्टयम् ।
सङ्कल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥ ३३ ॥

अभिमानात्मकस्तद्वदहङ्कारः प्रकीर्तितः ।
अनुसन्धानरूपं च चित्तमित्यभिधीयते ॥ ३४ ॥

सङ्कल्पाख्यमिति । सङ्कल्पवृत्तिरूपेण परिणतमन्तःकरणं मनः इत्यर्थः । निश्चयाख्यवृत्तिपरिणतं च बुद्धिः । अभिमानवृत्तिपरिणतमन्तः-करणं अहङ्कारः । पूर्वोत्तरानुसंधानरूपवृत्तिमच्चित्तमित्यर्थः ॥

मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥

इत्यभियुक्तोक्तेः । तत्र गर्वोऽभिमानः, स्मरणमनुसंधानं, विषयाः साध्या वृत्तय इत्यर्थः ॥ ३४ ॥

प्राणोऽपानस्तथा व्यान उदानाख्यस्तथैव च ।
समानश्चेति पञ्चैताः कीर्तिताः प्राणवृत्तयः ॥ ३५ ॥

खं वाय्वग्न्यम्बुक्षितयो भूतसूक्ष्माणि पञ्च च ।
अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः ॥ ३६ ॥

पुर्यष्टकमिति । एकैकं पञ्चकमेकैका पुरी, मनआदिचतुष्टयमेका पुरी, कामादिकं प्रत्येकमेकैका पुरीति पुर्यष्टकं । एतच्च ज्ञानेन्द्रियादिपञ्चकं जीवस्य भोगसाधनत्वात् तदुपाधित्वेन तदवस्थानप्रदेशत्वाच्च पुरीव राज्ञः पुरीत्यर्थः ॥

---

1. अ. जिह्वा घ्राणं चेन्द्रियपञ्चकम्

'ज्ञानेन्द्रियाणि खलु पञ्च तथापराणि
कर्मेन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः' ॥

इत्यभियुक्तोक्तेरिति । तत्र वार्तिके अभियुक्तश्लोके च अविद्यातमश्शब्दौ पूर्वपूर्वभ्रमजन्यवासनारूपाविद्यापरौ । मूलाविद्यायाः कारणशरीरत्वेन सूक्ष्मशरीरान्तर्भावासंभवात् । पूर्वपूर्वभ्रमजन्यवासनायामप्यविद्याशब्दः प्रयुक्तो वाचस्पतिमिश्रैः 'अनिर्वाच्याविद्याद्वितयसचिवस्य' इत्यत्र । यद्यपि —

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

इति प्राणादिसप्तदशकमेव लिङ्गशरीरमिति आत्मबोधादावुक्तम् । अत्र च कामकर्मादीनामपि लिङ्गशरीरान्तर्भाव उच्यते 'एतत्सूक्ष्मशरीरं स्यादिति' तथाप्यात्मबोधादिश्लोकेषूपलक्षणपरत्वेन कामकर्मादीनामपि ग्रहणं स्वीकर्तव्यम् । अन्यथा तेषां शरीरत्रयेऽपि अन्तर्भावाभावेन शरीरत्रयापलापेऽपि तदपलापाभावप्रसंगात् । तथा च स्थूलप्रपञ्चस्सर्वोऽपि स्थूलशरीरं, सूक्ष्मप्रपञ्चः सर्वोऽपि सूक्ष्मशरीरं, मूलप्रकृतिः कारणशरीरमिति शरीरत्रयापलापे सर्वप्रपञ्चापलापसिद्धिरिति द्रष्टव्यम् ॥ ३६ ॥

**एतत्सूक्ष्मशरीरं स्यात् मायिकं प्रत्यगात्मनः ।**

एतत्पुर्यष्टकं । तस्य निरसनयोग्यतां दर्शयितुं मायिकं इति विशेषणम् ।

एवं [1]सूक्ष्मशरीरं निरूप्य तस्य यस्यामवस्थायां भोगसाधनत्वं तामवस्थां दर्शयति —

**करणोपरमे जाग्रत्संस्कारोत्थप्रबोधवत् ॥ ३७ ॥**
**ग्राह्यग्राहकरूपेण स्फुरणं स्वप्न उच्यते ।**

1. ख, नास्ति ।

करणोपरम इति । करणानां चक्षुरादीनां उपरमे सति जाग्रदनुभव-जन्यसंस्कारोत्थान्तःकरणवृत्तिरूपप्रबोधयुक्तं यद्ग्राह्यग्राहकरूपेण स्फुरणं चैतन्यमस्ति तद्विषयभूतरथगजादिः तद्विषयकान्तःकरणवृत्तिश्चेति द्वयं स्वप्न इत्यर्थः । मूले 'जागरितसंस्कारजः प्रत्ययस्सविषयः स्वप्नः' इत्युक्तत्वात्तदनु-सारेणैवं व्याख्यातम् । अन्यथा चैतन्यस्य स्वप्नावस्थान्तर्भावे तस्याप्यपलापापत्तेः ॥

एवं शरीरमवस्थां चोक्त्वा तदभिमानिनं दर्शयति —

अभिमानी तयोर्यस्तु तैजसः परिकीर्तितः ॥ ३८ ॥

अभिमानीति । तयोः स्वप्नसूक्ष्मशरीरयोः । तैजस इति । तेजसि वासनायामभिमानित्वेन निर्वृत्तो भवतीति तैजस इत्यर्थः ॥ ३८ ॥

हिरण्यगर्भरूपेण तैजसं चिन्तयेद्बुधः ।

अत्र हिरण्यगर्भशब्देन समष्टिसूक्ष्मशरीराभिमानी सूत्रात्मोच्यते । यथा व्यष्टिभूतपत्रपुष्पशाखादिकं समष्टिभूतवृक्षरूपेण पश्यति एको वृक्ष इति, तथा व्यष्टिभूतसूक्ष्मशरीराभिमानिनं आत्मानं व्यष्टिसूक्ष्मशरीराभिमानं हित्वा समष्टिसूक्ष्मशरीराभिमानित्वेन ध्यायेदित्यर्थः ॥

एवं सूक्ष्मशरीरं स्वप्नावस्थां तदभिमानिनं चोकारार्थमुक्त्वा मकारार्थं वक्तुं कारणशरीरं तस्य भोगसंपादिकामवस्थां तदभिमानिनं च दर्शयति —

चैतन्याभास[1] खचितं शरीरद्वयकारणम् ॥ ३९ ॥

आत्माज्ञानं तदव्यक्तमव्याकृतमितीर्यते ।

चैतन्येति । केवलाज्ञानस्य शरीरद्वयकारणत्वासंभवाच्चैतन्याभास-खचितमित्युक्तम् । चैतन्यप्रतिबिम्बसहितमित्यर्थः । अत्र यदित्यध्याहारः । यच्छरीरद्वयकारणमज्ञानमस्ति तदव्यक्तमव्याकृतमितीर्यत इति संबन्धः ॥

---

१. कथितम् ।

ननु शरीरद्वयकारणत्वे तस्यार्थक्रियाकारित्वेन सत्तावश्यंभावात्तत्कार्यशरीरद्वयस्यापि सत्तासंभवात्तदपलापो न संभवतीत्याशंक्य नार्थक्रियाकारित्वमेव सत्वं किं तु अबाध्यत्वं, तच्चाधिष्ठानतत्वज्ञानबाध्यत्वादज्ञानस्य नास्तीत्यभिप्रायेणाह ––

**न सन्नासन्न सदसद्भिन्नाभिन्नं न चात्मनः ॥ ४० ॥**

**न सदिति** । तर्हि शशशृङ्गादिवदसदेव स्यादित्याशंक्याह — **नासदिति** । अज्ञोऽहमस्मीत्यपरोक्षतया प्रतीयमानत्वात् नात्यन्तमसदित्यर्थः । न च सत्वनिषेधेऽसत्वं असत्वनिषेधे सत्वं वा वक्तव्यं । परस्परविरुद्धयोरन्यतरनिषेधेऽन्यतरावश्यंभावादिति वाच्यं; परमते घटात्यन्ताभावे घटतदत्यन्ताभावयोरभाववत् सत्वासत्वयोरप्यभावोपपत्तिरिति भावः । तर्हि केवलसदसद्रूपत्वाभावेऽपि तदुभयरूपत्वं स्यादित्याशंक्याह —

**न सदसदिति** । एकस्यैकदैव सदसद्रूपत्वस्य विरुद्धत्वादित्यर्थः । ननु तदज्ञानमात्मनः सकाशाद्भिन्नं न वा ? भिन्नत्वे अद्वैतहानिः । अभिन्नत्वे बाध्याज्ञानाभिन्नत्वेनात्मनोऽपि बाध्यत्वापत्तिरित्यत आह — **भिन्नाभिन्नमिति** । भिन्नत्वाभिन्नत्वयोः परस्परविरुद्धयोरपि भावः पूर्ववदेव द्रष्टव्यः । यद्यपि न भिन्नं नाभिन्नं नापि भिन्नाभिन्नं कुतश्चिदित्यस्य सतोऽसतः प्रत्येकं मिलितस्य च प्रतियोगित्वमुच्यत इति आनन्दगिरीये व्याख्यातम् । तथापि वार्तिके आत्मन एव कण्ठरवेण भेदादिप्रतियोगित्वमुक्तमिति एवं व्याख्यातम् ॥ ४० ॥

ननु सत्वादिना निर्वक्तुमशक्यत्वेऽपि सभागत्वादिना निर्वक्तुं शक्यत एवेत्याशंक्य सभागत्वं नाम सावयवत्वं । तच्चावयवरूपकारणसमवेतत्वं । तच्चाज्ञानस्यानादित्वेन नास्तीत्याह —

**न सभागं न निर्भागं न चाप्युभयरूपकम् ।**
**ब्रह्मात्मैकत्वविज्ञानहेयं मिथ्यात्वकारणात् ॥ ४१ ॥**

**न सभागमिति ।** तर्हि निर्भागं भविष्यतीत्याशंक्य तद्भागभूताना-मंशभूतानां पृथिव्यादीनां विद्यमानत्वान्न निर्भागमित्याह — **न निर्भागमिति ।** अत एव नोभयरूपत्वमित्याह — **न चापीति ॥**

ननु सर्वात्मना निर्वक्तुमशक्यत्वे तत्स्वरूपाधिगतिरेव न स्यात् । लक्षणाभावे लक्ष्याधिगतेरसंभवादित्याशंक्य सत्वादिना निर्वचनाभावेऽपि आत्मज्ञानापनोद्यत्वादिरूपेण निर्वचनं संभवतीत्याह—**ब्रह्मेति ।** ब्रह्मात्मैकत्व-विषयकाज्ञानस्यैवानर्थहेतुत्वात्तद्विषयकज्ञानमेव तन्निवर्तकमित्यर्थः । **हेयमिति ।** नाश्यमित्यर्थः । ननु अन्यज्ञानेन अन्यस्य नाशः कथमित्याशंक्य मिथ्यात्वात् तदधिष्ठानतत्त्वज्ञानेन तदज्ञानस्य निवृत्तिः संभवतीत्याह— **मिथ्यात्वेति ॥**

एवं कारणशरीरस्य स्वरूपं निरूप्यावस्थां निरूपयति —

**ज्ञानानामुपसंहारो बुद्धेः कारणतास्थितिः ।**
**वटबीजे वटस्येव सुषुप्तिरभिधीयते ॥ ४२ ॥**

**ज्ञानानामिति ।** अत्र ज्ञानानामिति बहुवचनात् स्थूलसूक्ष्मार्थ-विषयकाणां जाग्रत्स्वप्नावस्थासंबन्धिनां सर्वेषां ज्ञानानामभावो विवक्षितः । तर्हि वृत्तीनामभावे बुद्धेरप्यभावः स्यादित्याशङ्क्याह — **बुद्धेरिति । कारण-तास्थितिरिति ।** कारणात्मना ज्ञानात्मना स्थितिरवस्थानं । पुनर्बुद्ध्युत्पादन-योग्यवासनात्मना अवस्थानमित्यर्थः । उपरत [1] वृत्तिकतया बुद्धेः कारणात्मनाव-स्थितिः सुषुप्तिरभिधीयत इत्यर्थः । ज्ञानानामुपसंहारो मुक्तावपीति बुद्धेः कारणतास्थितिरित्युक्तम् । तावत्युक्ते जाग्रद्दशायामतिव्याप्तिः, कार्यदशायामपि कार्यस्य कारणरूपेणावस्थानात् अत उक्तम् — **ज्ञानानामुपसंहार इति ।** तत्रानुरूपं दृष्टान्तमाह— **वटेति ॥ ४२ ॥**

**अभिमानी तयोर्यस्तु प्राज्ञ इत्यभिधीयते ।**

---

1. अ. वृत्तिकाया ।

जगत्कारणरूपेण प्राज्ञात्मानं विचिन्तयेत् ॥ ४३ ॥

तयोः कारणशरीरसुषुप्त्यवस्थयोः । जगदिति । व्यष्टिकारणशरीराभिमानिनं प्राज्ञात्मानं समष्टिमायावच्छिन्नेश्वरात्मना चिन्तयेदित्यर्थः ॥ ४३ ॥

ननु विश्वतैजसादीनां बहूनामङ्गीकारे चिदात्मकमेकं तत्त्वमित्यद्वैतहानिः स्यादित्याशङ्क्य तेषां भेदस्य तत्तदुपाधिकृतत्वात् स्वतश्चिदात्मनो न भेद इत्याह —

विश्वतैजससौषुप्तविराट्सूत्राक्षरात्मभिः ।
विभिन्नमिव [1] संमोहादेकं तत्त्वं चिदात्मकम् ॥ ४४ ॥

विश्वेति । अक्षरात्मभिरिति तृतीया इत्थंभावे । चिदात्मकमेकमेव तत्त्वं विश्वादिरूपेण विभिन्नमिव भासत इति शेषः । तत्र हेतुमाह — संमोहादिति । चिदात्मकमेकं तत्वमित्यज्ञानादित्यर्थः ॥ ४४ ॥

तादृशं ज्ञानं कथं भवतीत्याशङ्क्य तादृशज्ञानार्थं प्रपञ्चापलापप्रकारं दर्शयति विश्वादिकेत्यादिना ।

तत्र प्रथमं विश्वादीनां त्रयाणां वैराजादीनां त्रयाणां च भेदाभावसिद्ध्यर्थं ऐक्यचिन्तनं दर्शयति—

विश्वादिकं त्रयं यस्माद्वैराजादित्रयात्मकम् ।
एकत्वेनैव संपश्येदन्याभावप्रसिद्धये ॥ ४५ ॥

विश्वेति । यस्मादेवं संपश्येत्तस्मादात्मानमद्वयं पश्येदित्युत्तरेण संबन्धः । [2] तथा भेदचिन्तनेऽभेद एव भवतीत्यर्थः । तत्र प्रथमेनादिशब्देन तैजसप्राज्ञयोर्ग्रहणं द्वितीयेनादिशब्देन सूत्राक्षरात्मनोर्ग्रहणं । एकत्वेनेति । यथा व्यष्टिपत्रपुष्पफलशाखादिकमेको वृक्ष इति एकत्वेन पश्यति तथा

1. सम्मोहादेकं सत्त्वम् । 2. ब. नास्ति ।

व्यष्टिविश्वादीन् समष्टिवैराजात्मना पश्येदित्यर्थः । अन्याभावेति । अन्यत्वाभावसिद्धये इत्यर्थः ॥ ४५ ॥

तथा च त्रयः परिशिष्टा भवन्ति । तेषां त्रयाणामपि चिदात्मनि विलापनं वक्तुं अकारादिशब्दस्याप्यपलापसिध्यर्थं, शब्दार्थयोरभेदं दर्शयति —

ओंकारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ।
वाच्यवाचकताभेदाद्भेदेनानुपलब्धितः ॥ ४६ ॥

ओंकार इति । विश्वप्राज्ञादिलक्षणमखिलमर्थजातं सर्वशब्दात्मकप्रणवमात्रं अकारोकारमकारमात्रं । तत्र च स्थूलप्रपञ्चवाचकसर्वशब्दात्मकत्वमकारस्य, सूक्ष्मप्रपञ्चवाचकसर्वशब्दात्मकत्वमुकारस्य, कारणवाचकसर्वशब्दात्मकत्वं मकारस्य च द्रष्टव्यम् । एतत्सर्वं माण्डूक्यभाष्यादौ स्पष्टमुक्तम् । सर्वशब्दात्मकत्वं च प्रणवस्य तद्यथा शंकुनेत्यादि छान्दोग्योपनिषदि स्पष्टमुक्तम् । तत्र हेतुमाह — वाच्यवाचकतेति । भवितृप्रधानो निर्देशः । वाच्यवाचकाभेदादित्यर्थः । वाच्यवाचकाभेदे हेतुमाह—भेदेनेति । वाच्याद्भेदेन वाचकस्य, वाचकाद्भेदेन वाच्यस्यानुपलब्धेरित्यर्थः । वाच्यवाचकाभेदो माण्डूक्योपनिषद्भाष्यादौ सम्यङ्निरूपित इति नेह प्रपञ्च्यते ॥ ४६ ॥

एवं सामान्यतः प्रणवतदर्थयोरभेदमुक्त्वा इदानीं विशिष्य प्रणवावयवानां तदर्थानां चाभेदं दर्शयति —

अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः ।
प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४७ ॥

अकारमात्रमिति ॥ ४७ ॥

एवं समाधिकालपूर्वकृत्यमुक्त्वा समाधेरव्यवहितपूर्वकालकर्तव्यं प्रविलापनप्रकारमाह —

समाधिकालात्प्रागेवं विचिन्त्यातिप्रयत्नतः ।
स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४८ ॥

समाधीति । विश्ववैराजाद्यभेददृष्टीनां प्रणवावयवतदर्थाभेददृष्टीनां चासुलभत्वादतिप्रयत्नत इत्युक्तम् ॥ ४८ ॥

स्थूलादिक्रमेण सर्वं चिदात्मनि विलापयेदिति संक्षेपेणोक्तं विलापनप्रकारं विशिष्य दर्शयति —

अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।
उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ ४९ ॥
मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।

अकारमिति । उकारे प्रविलापयेदिति । अकार उकार एवेत्येवंप्रकारेणेत्यर्थः । मकारे प्रविलापयेदिति । उकारो मकार एवेति प्रकारेणेत्यर्थः । प्राज्ञं चिदात्मनि विलापयेदिति । मकारोऽहमेवेत्येवंप्रकारेणेत्यर्थः । एवं च मकार ओंकार एव। ओंकारोऽहमेवेति पाठान्तरं वार्तिकाननुगुणमेवेति वेदितव्यम् । तादृशपाठस्य सर्वोपनिषद्व्याख्यानाननुगुणत्वात् । प्रपञ्चस्तु पञ्चीकरणभावप्रकाशिकायां द्रष्टव्यः ॥

एवं चिदात्मनि विलापयेदिति सर्वप्रपञ्चप्रविलापनमुक्त्वा चिदात्मा कीदृश इत्याकांक्षायां चिदात्मस्वरूपं कथयन् संप्रज्ञातसमाधिप्रकारमाह —

चिदात्माहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ५० ॥
परमानन्दसन्दोहो वासुदेवोऽहमोमिति ।

चिदात्मेति । अत्र च वाक्यद्वयाङ्गीकारात् पूर्वोत्तरार्धयोरहमित्यस्य न पौनरुक्त्यं। नित्यपदं शुद्ध इत्यादिषु सर्वत्रान्वेति नित्यशुद्धो नित्यबुद्धो

नित्यमुक्तो, नित्यसद्रूपो नित्यमद्वयरूप इति । तथा च शुद्धत्वादीनां कादाचित्कत्वं निरस्तम् । एतादृशचिदात्मरूपस्य इष्यमाणत्वे हेतुं दर्शयति— परमेति तस्य पूर्णतां दर्शयति वासुदेव इति ॥

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥

इति विष्णुपुराणवचनात्तस्य पूर्णत्वार्थकत्वादित्यर्थः परमानन्दसन्दोहश्चासौ वासुदेवश्चेति समानाधिकरणसमासः । आनन्दसन्दोहरूपत्वं च सर्वेषामानन्दानां ब्रह्मानन्देऽन्तर्भावादिति द्रष्टव्यम् । वासुदेवस्य प्रणवार्थत्वात् प्रणवाभिन्नत्वादोमित्यस्य तद्वाचकवासुदेवादिशब्दैः सामानाधिकरण्यं द्रष्टव्यम् । अथवा पूर्वार्धोक्तस्य महावाक्यार्थस्य स्वानुभवेनाङ्गीकारार्थो वा ओमिति ॥

एवं शब्दानुविद्धसंप्रज्ञातसमाधिमुक्त्वाऽसंप्रज्ञातसमाधिं वक्तुं संप्रज्ञातसमाधिरूपवृत्तिविलयप्रकारमाह —

**ज्ञात्वा [1] विवेचितं चित्तं तत्साक्षिणि विलापयेत् ॥ ५१ ॥**

ज्ञात्वेति । बहुकालं संप्रज्ञातसमाधौ स्थित्वेत्यर्थः । तत्साक्षिणीति । विवेचकचित्तसाक्षिणीत्यर्थः ॥ ५१ ॥

इदानीमसंप्रज्ञातसमाधिमाह—

**चिदात्मनि विलीनं [2] चेत्तच्चित्तं न विचालयेत् ।**
**पूर्णबोधात्मनाऽऽसीत पूर्णाचलसमुद्रवत् ॥ ५२ ॥**

चिदात्मनीति । पुनः किं कुर्यादित्यत आह—पूर्णेति । तत्र दृष्टान्तमाह— पूर्णेति । न चलतीत्यचलः । पूर्णः अचलश्च योऽयं समुद्रः तद्वदासीतेत्यर्थः ॥ ५२ ॥

---

1. विवेचनं  2. च तच्चित्तं

एवं समाधिप्रकारमुक्त्वा तत्परिपाकफलभूततत्त्वसाक्षात्कारप्रकारं दर्शयति —

एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः ।
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ ५३ ॥

एवमिति । एवमुक्तप्रकारेण समाहितः समाधियुक्तो योगी तत्परिपाकानन्तरं अद्वयमात्मानं पश्येत् । ज्ञाने विध्यसंभवात् साक्षात्करोतीत्यर्थः । ज्ञाने विध्यसंभवे तादृशसाक्षात्कारोत्पत्यर्थं समाधिकालेऽपि श्रद्धाभक्तीन्द्रियजयक्रोधजयादीनामावश्यकतां दर्शयति श्रद्धेत्यादिना ॥५३॥

ननु लौकिकं व्यापारं विहाय सर्वदा तत्त्वनिष्ठारूपसमाधिः कर्तुं न शक्यत इत्याशङ्क्याधिकारिविशेषणीभूतवैराग्यस्यैव दार्ढ्याय समाधिदशायामपि वैराग्यं दर्शयति—

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवेत्सदा ॥ ५४ ॥

आदीति । आदौ भोगसाधनीभूतद्रव्यार्जने दुःखं, मध्ये तत्परिपालने दुःखं, अवसाने तन्नाशे दुःखमित्येवंप्रकारेण सर्वमपि सर्वदा दुःखहेतुरेव । एवं ब्रह्मलोकान्तलोकसाधनकर्माद्यार्जनमपि दुःखहेतुरेवेति निश्चित्य सातिशयानित्यफलसाधनं सर्वं परित्यज्य नित्यनिरतिशयपुरुषार्थसिद्ध्यर्थं सर्वदा तत्त्वनिष्ठारूपसमाधिमान् भवेदित्यर्थः ॥ ५४ ॥

एवं समाधिनिष्ठया तत्त्वसाक्षात्कारलाभे किं फलं भवतीत्याशंक्य कृतकृत्यता भवतीत्याह —

यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् ।
न तेन किंचिदाप्तव्यं ज्ञातव्यं वावशिष्यते ॥ ५५ ॥

कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत्सदा ।
आत्मन्यारूढभावस्तु जगदेतन्न वीक्षते ॥ ५६ ॥

कदाचिद्व्यवहारेषु द्वैतं यद्यपि पश्यति ।
बोधात्मव्यतिरेकेण न पश्यति चिदन्वयात् ॥ ५७ ॥

य इति । सर्वत्र परिपूर्णपरमानन्दाद्वयब्रह्मरूपं आत्मानं साक्षात्कुर्वतः सर्वानन्दानां ब्रह्मानन्द एवान्तर्भावादाप्तव्यान्तरं नास्ति । 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं स्यादिति' ज्ञातव्यान्तरमपि नास्तीत्यतः कृतकृत्यो भवतीत्यर्थः । कृतकृत्यो भवेदित्यस्य विवरणं जीवन्मुक्तो भवेदिति । सदेति — सदा समाधिकाले तदितरभिक्षाटनादिव्यवहारकाले चेत्यर्थः । अन्यथा जीवन्मुक्तत्वस्य ज्ञानात्पूर्वकाले विदेहकैवल्यकाले चाभावेन विरोधात् । अत एव समाधिकाले तदितरभिक्षाटनादिव्यवहारकाले द्वैतदर्शनेऽपि तस्य मिथ्यात्वेनैव दर्शनान्न जीवन्मुक्तताया विरोध इति दर्शयति — कदाचिदिति । बद्धजनसाधारणद्वैतदर्शनमङ्गीकरोति–द्वैतं यद्यपि पश्यतीति । तर्हि बद्धजनात्को विशेष इत्यत आह–बोधात्मेति । बद्धजनः सर्वदा द्वैतं पश्यति । विद्वांस्तु कदाचित्समाधिव्यतिरिक्तकाल एव, इत्येको विशेषः । अपरस्तु, बद्धजनो बोधात्मव्यतिरेकेण द्वैतं सत्यतया पश्यति, विद्वांस्तु सत्यतया न पश्यति । तत्र हेतुः–चिदन्वयादिति । सर्वत्र प्रपञ्चे चित एव सत्ताप्रदत्वेनानुस्यूतत्वज्ञानादित्यर्थः ॥ ५७ ॥

विद्वान् द्वैतं सत्यतया न पश्यतीत्युक्तं, कथं पुनः पश्यतीत्याह—

किं तु पश्यति मिथ्यैव दिङ्मोहेन्दुविभागवत् ।

किन्त्विति । शुद्धाद्वितीयब्रह्मणः प्रपञ्चाकारत्वस्य मिथ्यात्वे दृष्टान्तमाह— दिङ्मोहेति । प्राच्यादीनां प्रतीच्यादिप्रतिपत्तिवदित्यर्थः । एकस्यैव ब्रह्मणो देवतिर्यङ्मनुष्यादिरूपेण भेदस्य मिथ्यात्वे दृष्टान्तमाह— इन्द्विति ।

यथा एकस्यैवेन्दोर्भेदेन भानं नेत्रावष्टम्भाद्युपाधिवशात्तथैकस्यैव ब्रह्मणस्तत्तदुपाधिवशाद्देवतिर्यङ्मनुष्यादिरूपेण भेदभानमित्यर्थः ॥

ननु तत्त्वसाक्षात्कारानन्तरमज्ञाननाशेऽपि पुनश्शरीरादिप्रतिभासाङ्गीकारेऽनिर्मोक्ष एव स्यादित्याशङ्क्य तस्यावधिमाह—

**प्रतिभासश्शरीरस्य तदाऽऽप्रारब्धसंक्षयात् ॥ ५८ ॥**

**प्रतिभास** इति । तदा ज्ञानकालेऽपि **शरीरस्य प्रतिभासः** आप्रारब्धसंक्षयादिति च्छेदः । मर्यादायामाङ् प्रारब्धसंक्षयपर्यन्तं । तन्नाशे तु शरीरादिप्रतिभासोऽपि नश्यतीत्यर्थः । तदुक्तमभियुक्तैः—

शास्त्रेण नश्येत्परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात् ।
प्रारब्धनाशात् प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ इति ।

अस्मिन्नर्थे श्रुतिं प्रमाणयति—

**तस्य तावदेव चिरमित्यादि श्रुतिरब्रवीत् ।**

**तस्येति । तस्य** ज्ञानिनस्तावदेव तावत्पर्यन्तमेव **चिरं** विलम्बः यावत्प्रारब्धकर्मणा न विमोक्ष्ये न विमोक्ष्यते । अथ प्रारब्धकर्मविमोचनानन्तरं संपत्स्ये संपद्यते । लकारपुरुषव्यत्ययश्छान्दसः । ज्ञानेनाज्ञानस्यावरणशक्तिनाशेऽपि तत्कृतो विक्षेपः कंचित्कालं चक्रभ्रमिन्यायेन, परमते तन्त्वादिनाशानन्तरमपि पटादिवच्चानुवर्तत इति भावः ॥

तर्हि विदुषो बद्धजनस्येव शरीरादिप्रतिभासांगीकारे तत्कृतसुखदुःखादिकमपि स्यादित्याशंक्य तस्य मिथ्यात्वेन ज्ञातत्वान्न दुःखादिहेतुत्वमित्याह—

**प्रारब्धस्यानुवृत्तिस्तु मुक्तस्याभासमात्रतः ॥ ५९ ॥**

सर्वदा मुक्त एव स्यात् ज्ञाततत्त्वः पुमानसौ ।

प्रारब्धस्येति । प्रारब्धस्य प्रारब्धकार्यस्य शरीरादेरित्यर्थः । मुक्तस्य जीवन्मुक्तस्य आभासमात्रतः प्रतीतिमात्रान्न तु वस्तुतोऽनुवृत्तिरस्तीत्यर्थः । तथा च — यथा सर्पभ्रमानन्तरं रज्जुतत्त्वं ज्ञातवतः अतिसादृश्याद्रज्ज्वाः सर्पाकारतया प्रतीतावपि न भयकम्पादीनि एवं जीवन्मुक्तस्य शरीरादिप्रतीतावपि मिथ्यात्वेन ज्ञानान्न दुःखादिहेतुत्वमिति भावः । तत्र हेतुमाह — सर्वदेति । ज्ञाततत्त्वः पुमान् सर्वदा समाधिकाले तदितरव्यवहारकाले च मुक्त एव । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुत्या ज्ञानसमकालमेव मुक्तेः सिद्धत्वात् । ततो विदुषः शरीरादिप्रतिभासेऽपि न दुःखादिप्रसक्तिरिति भावः ॥

प्रारब्धक्षयानन्तरं विदेहकैवल्यप्राप्तिप्रकारमाह —

प्रारब्धभोगशेषस्य संक्षये तदनन्तरम् ॥ ६० ॥

अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ।

आनन्दममलं शुद्धं मनोवाचामगोचरम् ॥ ६१ ॥

प्रारब्धेति । अविद्या शास्त्रेण नश्येदित्यादिश्लोकेनोक्ता त्रिविधा, सैव तिमिरं वस्तुस्वरूपाच्छादकत्वात् तदतीतं निवृत्ताविद्यकमित्यर्थः । कारणाभावमुक्त्वा कार्याभावमप्याह — सर्वेति । आभास्यन्त इत्याभासाः शरीरादयः तद्वर्जितमित्यर्थः । अविद्यातिमिरातीतत्वादेवामलं सर्वाभासविवर्जितत्वादेव शुद्धम् । अत एव केवलानन्दरूपं । तस्यापरिमिततां दर्शयति — मन इति । मनांसि वाचश्च मनोवाचः तासामगोचरं अपरिमितत्वादित्यर्थः ॥ ६१ ॥

तदानीं तत्स्वरूपप्रतिपत्त्यर्थं शब्दाद्यन्वेषणव्यावृत्त्यर्थमाह —

वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ।

प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ॥ ६२ ॥

**वाच्येति** । तद्दशायामिष्टानिष्टपरिहारार्थं प्रवृत्त्यादिकं वारयति — **इहैवेति** । आनन्दस्याज्ञायमानस्य पुरुषार्थत्वाभावादाह — **प्रज्ञानघनमानन्दमिति** । स्वप्रकाशतया ज्ञायमानानन्दरूपमित्यर्थः । प्रज्ञानघनमित्यनेन भाट्टादिमत इव चिदचिदात्मकं न भवति, किं तु केवलज्ञानस्वरूपमेवेति दर्शितम् । आनन्दस्वरूपस्यात्यन्तमभिलषितत्वात् पुनर्वचनम् । विष्लृ व्याप्ताविति विषिधातुनिष्पन्नत्वात् विष्णुशब्देन त्रिविधपरिच्छेदरहितं ब्रह्मोच्यते । विष्णोरिदं वैष्णवं ब्रह्मस्वरूपं राहोश्शिर इत्यादिवदभेदेऽपि भेदोपचारः । पद्यत इति **पदं अश्नुते** प्राप्नोति । ब्रह्मस्वरूपो भवतीत्यर्थः । न तु विष्णोः पदं वैकुण्ठाख्यं लोकं प्राप्नोति । तस्योपासनाफलत्वेन तत्त्वसाक्षात्कारफलत्वासंभवात् । ब्रह्मसाक्षात्कारस्य 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुत्या ब्रह्मैक्यप्राप्तिफलकत्वादिति भावः ॥ ६२ ॥

एवं मुमुक्ष्वनुग्रहार्थं कृतस्य प्रकरणस्यार्थग्रहणे प्रकारमाह—

**इदं प्रकरणं यत्नात् ज्ञातव्यं भगवत्तमैः ।**
**अमानित्वादिनियमैर्गुरुभक्तिप्रसादतः ॥ ६३ ॥**

**इदमिति** । इदं पञ्चीकरणवार्तिकरूपं **प्रकरणं यत्नात्** गुरुशुश्रूषादियत्नपूर्वकं **ज्ञातव्यं** अर्थतो ज्ञातव्यं, मुमुक्षुभिरिति शेषः । कीदृशैर्गुरुभिर्ज्ञातव्यमित्यत आह — **भगवत्तमैरिति** । वेदान्तजन्यज्ञानवन्तो भगवन्तः तेषां भगवद्रूपत्वात् । तत्वसाक्षात्कारवन्तस्तु भगवत्तमास्तैर्निमित्तैस्तान् गुरून् कृत्वेत्यर्थः । 'गुरुभिर्ज्ञात्वा गुरूणां मत'मित्यादिदर्शनात् । पुनः कीदृशैरित्यत आह — **अमानित्वादीति** । अमानित्वादयः अमानित्वमदम्भित्वमित्यादि भगवद्गीतोक्ता नियमा येषां तैरित्यर्थः । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ'मित्यादिश्रुतेः । एवंविधा गुरवः प्राप्या इत्यर्थः । न च तादृशाः कृतकृत्यतया किमर्थं मामुपदिशन्तीति वाच्यम् । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्व-

दर्शिनः ॥' इति गीतावचनात् तादृशा अपि केवलं कृपया उपदिशन्तीति भावः । **गुरुभक्त्येति** । गुर्वी च सा भक्तिश्चेति गुरुभक्तिस्तया यः प्रसादः, गुरूणामनुग्रहस्तस्मात् ज्ञातव्यमित्यर्थः । गुरुषु भक्तिरिति वा ॥ ६३ ॥

एवं विशिष्टगुर्वनुग्रहादिदं प्रकरणमर्थतो ज्ञात्वा किं कर्तव्यमित्यत आह —

**इमां विद्यां प्रयत्नेन योगी संध्यासु सर्वदा ।**
**समभ्यसेदिहामुत्रभोगानासक्तधीस्सुधीः ॥ ६४ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीमच्छंकरभगवत्पादशिष्य श्रीसुरेश्वराचार्यविरचितं पञ्चीकरणं संपूर्णम् ॥

**इमामिति** । विद्यां विद्याहेतुभूतमिदं प्रकरणमित्यर्थः । उपनिषच्छब्दवाच्यविद्याहेतुभूतवेदान्तवाक्येषु उपनिषच्छब्दवद्द्रष्टव्यम् । **प्रयत्नेनेति** । लोकवार्तादिविघ्ना यथा न स्युस्तथा प्रयत्नं कृत्वेत्यर्थः । **संध्यासु** सायंप्रातः संध्यासु **समभ्यसेत्** सम्यगभ्यसेत् अर्थानुसंधानपूर्वकं जपेदित्यर्थः । तत्राधिकारिणं दर्शयति—**इहेति** । वैराग्यं साधनचतुष्टयसंपत्त्युपलक्षणार्थः । **सुधीरिति** श्रवणमननजन्यज्ञानवानित्यर्थः । कृतश्रवणमननस्यैव निदिध्यासनेऽधिकारादिति ।

अनया पञ्चीकरणवार्तिकाभरणरूपया कृत्या ।
श्रीकृष्णः प्रीतो भवताद्विबुधार्थिनां समीक्ष्य मोदन्ताम् ॥

इति शम् ॥ ६४ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीकैवल्येन्द्रसरस्वतीपूज्यपादशिष्य श्रीमज्ज्ञानेन्द्रसरस्वती पूज्यपादशिष्य श्रीमदभिनवनारायणेन्द्रसरस्वतीभिः विरचितं पञ्चीकरणवार्तिकाभरणं समाप्तम् ॥

---

## ॥ श्लोकानुक्रमणिका ॥



